अष्टम्यां मङ्गलदिने चतुर्दश्यामथापि वा।
सन्ध्यायां देवदेवेशि लिखेन्मन्त्रं समाहितः ॥३७॥
मघायां श्रवणायां वा रेवत्यां वा विशेषतः।
सिंहराशौ गते चन्द्रे कर्कटस्थे दिवाकरे ॥३८॥
मीनराशौ गुरौ याते वृश्चिकस्थे शनैश्चरे।
लिखित्वा धारयेद्यस्तु उत्तराभिमुखोभवन् ॥३९॥
श्मशाने प्रान्तरे वापि शून्यागारे विशेषतः।
निशायां यो लिखेन्मन्त्रं तस्य सिद्धिरचञ्चला ॥४०॥
भूर्जपत्रे लिखेन्मन्त्रं गुरुणा च महेश्वरि।
ध्यानधारणयोगेन धारयेद्यस्तु भक्तितः।
अभिचारात्तस्य सिद्धिः स्यान्नात्र कार्या विचारणा ॥४१॥

इति रुद्रयामले उग्रताराकवचं समाप्तम्



## अथ षोढाकवचम्

ॐ अथ वक्ष्याम्यहं देव्यास्तारायाः कवचं शुभम्।
न सिद्ध्यति विना येन तारामन्त्रं कदापि हि ॥१॥
पुरा कैलासशिखरे तारां पप्रच्छ शङ्करः।
गुप्तभावेन देवेशि कथयस्व तु सादरम् ॥२॥
केनोपायेन सहसा शरीरं सुदृढं भवेत्।
कथं वा सिद्धिरतुला तव मन्त्रविदां प्रिये ॥३॥

तारोवाच

अतिगुह्यतरं वाक्यं निःसृतं वक्त्रपङ्कजात्।
इदं रहस्यं परमं कथयामि त्वयि प्रभो ॥४॥
श्रूयतां परमं गुह्यं कवचं मन्मुखात्सृतम्।
मधुकैटभयोर्युद्धे कथितं पद्मजन्मना ॥५॥
तत्प्रभावात्तु देवेश स्वयं विष्णुर्न गच्छति।
भवत्सु कथितं पूर्वं तन्न स्मरसि मायया ॥६॥
उद्धृतं सारभूतानां कवचं योगिनीमतम्।
न कस्यचित्प्रदातव्यं न प्रकाश्यं कथञ्चन ॥७॥

शपथं कुरु मे देव यदि स्नेहोऽस्ति मां प्रति।
श्रूयतां सावधानेन निखिलं सारविग्रहम् ॥८॥
सत्यं सत्यं पुनः सत्यं सत्यमेव पुनः पुनः।
कवचेन विना देव यो मामर्चयति क्षणात् ॥९॥
तमश्नाति महोग्रा सा योगिनीभिः सुनिश्चितम्।
ब्रह्मविष्णुमहेशानां बीजं रक्षतु मूलकम् ॥१०॥
तदेव शक्तिबीजन्तु लिङ्गं रक्षतु यत्नतः।
मणिपूरं सदा पातु वधुबीजमशेषतः ॥११॥
अनाहतं कूर्चबीजं पातु मे हृदयस्थितम्।
अस्त्रन्तु सर्वदा पातु विशुद्धं कण्ठभूषणम् ॥१२॥
शेषन्तु पातु मे नित्यमाज्ञास्थानं द्विपत्रकम्।
शीर्षं पातु सदा तारा जटा पातु सदाननम् ॥१३॥
नीलसरस्वती पातु हृदयं सर्वदा पुनः।
मूलाधारं सदा पातु महानीलसरस्वती ॥१४॥
अक्षोभ्यः पातु सर्वाङ्गं बृहती पातु भालकम्।
उग्रतारा देवता मे गह्वरं पातु सर्वदा ॥१५॥
चरणौ मे सदा पातु हुं बीजं तदशेषतः।
स्तनद्वयं तथा पातु लक्ष्मीर्देवी च शाश्वती ॥१६॥
वसन्मन्त्रं सदा पातु सरस्वती प्रयत्नतः।
रतिः पातु सदा बीजं प्रीतिर्मे वदनं सदा ॥१७॥
कीर्त्तिः कीर्त्तिं सदा पातु शान्तिः शान्तिं सदावतु।
पुष्टिर्मे पातु पुष्टिञ्च तुष्टिस्तुष्टिं सदैव हि ॥१८॥
वैरोचनः पातु शङ्खं शङ्खपूर्वस्तथैव च।
पाण्डुरो मे सदा गण्डं पातु नित्यञ्च सर्वशः ॥१९॥
पद्मनाभः सदा पातु नाभिं मे दशपत्रिकाम्।
असिताभ्रः पातु लिङ्गं नाभकः पातु कर्णकम् ॥२०॥
सामको मे तथा हस्तौ पाण्डुरः पातु कण्ठकम्।
तारकः पातु हृदयं पृष्ठं पद्मान्तको मनः ॥२१॥
पार्श्वद्वन्द्वं सदा पातु यमान्तकनरान्तकौ।
चरणौ पातु मे नित्यं विघ्नान्तकसमाह्वयः ॥२२॥
तावत्ते पातु सततमष्टाङ्गं परमेश्वरी।
इतीदं कथितं देव कवचं मन्मुखात्सृतम् ॥२३॥

प्रमादाद्यदि देवेश यत्र कुत्र प्रकाश्यते ।
योगिनिभिस्तदा हन्तु स्वयञ्च वधकारिणी ॥२४॥
दद्याच्छान्ताय शिष्याय तन्त्रमन्त्रयुताय च ।
गुरुभक्तियुतायैव तदा सिद्धिरनुत्तमा ॥२५॥
रहस्यं कथितं सर्वमनन्तफलदायकम् ।
गोपितव्यं त्वया देव न प्रकाश्यं कथञ्चन ॥२६॥

इति श्रीताराकवचं समाप्तम्



## अथ महिषमर्द्दिनीस्तोत्रम्

भैरव उवाच

मच्चित्ते चर चण्डि चूर्णितदुराचारप्रचण्डासुरे
स्वैरं दारय भूरि दुर्द्धरदरद्रोहोर्मिमर्मापदः ।
तेनायं निरुपद्रुतो निरूपमश्रीपादपद्माटवी-
प्राप्तानन्दरसार्णवे मम मनोहंसश्चिरं नन्दतु ॥१॥
हित्वा चण्डिहिरण्यदारणपटुप्रोद्दामहस्ताङ्गुलि-
स्फायत्कप्रसुमेरुसोदरसटाटोपं नृसिंहं सुराः ।
मानस्तत्पशुपाशपेषणपटुश्रीपादसंसेविनं
सेवन्ते करिवैरिणं किमरिभिर्भीतिर्भवत्सेविनाम् ॥२॥
चण्डि! त्वद्विषयान्तराक्षरपदं श्रोत्रान्तरं चेद्गतं
तत्तत्त्वं पुरुषप्रकृत्यनुगतं ब्रह्मादिभिर्गीयते ।
तस्माद्देवि! समस्तदैवतसुधाधारैकधामस्फुरत्
श्रीमत्पादपयोब्जचुम्बनपरं मामद्य सम्भावय ॥३॥
मन्निन्दा यदि वा स्तुते कुलपथाचाराद्वरं मास्तु वा
कीर्त्तिः केशवकौशिकार्चनचरी नैवास्तु मत्सन्निधिः ।
मातर्ब्रह्महरिस्मरादिहुतभुग्दैत्यारिसेवास्पद-
श्रीमत्पादपयोजचिन्तनविधौ चित्तं सदैवास्तु नः ॥४॥
निर्द्दिष्टोऽस्मि यदि त्वदीयपदभुक् पूर्वापरीभावने
निर्दिष्टस्य तदा ममापि विरलं किंवास्तु सिद्धास्पदम् ।
तस्माद्देवि! कृपाभराञ्चिततरं श्रीपादपद्मद्वयं
मच्चित्तेऽक्षतसम्पदं प्रसरतु क्षेमङ्करि क्षम्यताम् ॥५॥

स्वात्मानं परिरभ्य भूतपतिरप्युन्मादमासादितः
स्फारं जीवनरक्षणे स च कृती नैवाभविष्यत्प्रभुः ।
दैवाद्विच्युतचन्द्रचन्दनरसप्रागल्भ्यगर्भं द्रवन्
माध्वीपूर्णभवत्पदैककमलामोदेन नास्वादितः ॥६॥
हा हा मातरनादिमोहजलधिव्याहारसिद्धाखिल-
ब्रह्मानन्दरसाभिषेकविलसत् स्वान्तोदरे मादृशि ।
युष्माकं सुरवृन्दनिर्भरमनस्तापाभिभूतिक्षमः
श्रीमद् भक्तिरसातिदुर्दिनपरी वाहः सदा सर्पतु ॥७॥
त्वत्पादस्फुरदंशुजालजठरच्चित्तांशुकोटिस्खलद्-
ध्वान्तस्वान्तविसारि निर्मलचिदानन्दत्रयं दैवतम् ।
सर्गं संसृजति स्थितिं वितनुते सृष्टिं पुनर्लुम्पति
प्रोद्भिन्नाञ्जननीलनीरदमहः चित्ते सदैवास्तु नः ॥८॥
या शश्वन्महिषच्छलस्फुटमिलद्गर्जद्विधावत्स्खल-
द्वक्त्रान्तःप्रसवत्वमस्तमशिरो दैत्यं समालम्बते ।
सा दुर्गा भयदुर्गदुर्गतिहरा लक्षान्तरत्रासिनी
दृप्यद्दैवतवैरिदारणपटुर्जीयाज्जयाह्लादिनी ॥९॥
नृत्यत् खेटकचामराञ्चलचलच्चक्राद्यसर्वावर-
स्फायत् सैन्यशिलीमुखोच्छलदनल्पानिक्षताम्राम्बुधौ ।
झञ्झावातविसर्पिनर्तितशिरः साटोपदुष्टासुर-
क्रट्यत्खण्डविखण्डिताखिलशकुन्तक्षुत्पिपासोज्वले! ॥१०॥
चञ्चत्कम्रविरामकालकलतीव्रास्फालसम्पादको-
न्माद्यन्माहिषतिर्यगानतशिरःशृङ्गान्तराले स्थले ।
वस्वर्णैर्वसुपत्रमध्यकलितैर्बद्धा श्रुतिर्मातृभिः
सेव्ये चारुरणाङ्गणे रणमुदा घूर्णायमानां स्मरेत् ॥११॥
ऊर्ध्वाधःक्रमसव्यवामकरयोश्चक्रं दरं कर्त्रिकां
खेटं बाणधनुस्त्रिशूलभयहृन्मुद्रां दधानां शिवाम् ।
श्यामां नीलघनोच्चकुन्तलचयप्रोनद्धजूटां स्खलद्-
वीरास्फाललसत्करालवदनां घोराट्टहासोद्भटाम् ॥१२॥
एवं ये तव देवि मूर्तिमनघां ध्यायन्ति दुर्गादिभिः
शक्राद्यैरभिपूजितां परपुरक्षोभादिकं कुर्वते ।
राज्यं शत्रुजयः समर्थधिषणां काव्यामृतादर्शन-
स्तम्भोच्चाटनमारणादिकृतिनां तेषां स्वयं जायते ॥१३॥

स्तोत्रं ते चरणारविन्दयुगलध्यानावधानान्मया
मन्त्रोद्धारकुलोपचारचरितं गूढोपदिष्टं यदि।
ये शृण्वन्ति पठन्ति देवि! तरसा श्रीमोक्षकामादय-
स्तेषां हस्तगता भवन्ति जगतां मातर्नमस्ते जयः ॥१४॥

इति कुलचूडामणौ महिषमर्दिनीस्तोत्रं समाप्तम्



## अथ महिषमर्दिनीकवचम्

### ईश्वर उवाच

अथ वक्ष्ये महेशानि कवचं सर्वकामदम्।
यस्य प्रसादमासाद्य भवेत् साक्षात्सदाशिवः ॥१॥
ॐकारं पूर्वमुच्चार्य मन्त्री मन्त्रस्य सिद्धये।
प्रपठेत् कवचं नित्यं मन्त्रवर्णस्य सिद्धये ॥२॥
महिषमर्द्दिन्या कवचस्य भगवान् महाकाल ऋषिरनुष्टुप्
छन्दः आद्या शक्तिर्देवता चतुर्वर्गफलप्राप्तये विनियोगः ॥३॥
ह्लीं पातु मस्तके देवी कामिनी कामदायिनी।
मकारः पातु मां देवी चक्षुर्युग्मे महेश्वरी ॥४॥
हिकारः पातु वदनं हिङ्गलासुरनायिका।
षकारः पातु मां श्वेता जिह्वायाञ्चापराजिता ॥५॥
मकारः पातु मां देवी मर्दिनी सुरनायिका।
र्द्दिकारः पातु मां देवी सावित्री कलिनाशिनी ॥६॥
निकारः पातु मां नित्या हृदये बाहुपार्श्वयोः।
नाभौ लिङ्गे गुदे कण्ठे कर्णयोः पृष्ठके तथा ॥७॥
शिखायां कवचे पादे मुखे जङ्घायुगे तथा।
सर्वाङ्गे पातु मां स्वाहा सर्वशक्तिसमन्विता ॥८॥
कामाख्या पातु मां स्वाहा सर्वाङ्गे मर्द्दिनी शिवः।
दशाक्षरी महाविद्या सर्वाङ्गे पातु मर्दिनी ॥९॥
मर्दिनी पातु सततं मर्दिनी रक्षयेत् सदा।
राजस्थाने तथा दुर्गे सिंहव्याघ्रभयादिषु ॥१०॥
श्मशाने प्रान्तरे दुर्गे नौकायां वह्निमध्यतः।
मर्द्दिनी पातु सततं मर्दिनी रक्षयेत् सदा ॥११॥

दुर्गा पातु सदा देवी आर्या पातु सदा मम।
प्रभा पातु महेशानी कनका सर्वदावतु ॥१२॥
कृत्तिका पातु सततं अभया सर्वदावतु।
प्रभा पातु महामाया माया पातु सदा मम ॥१३॥
प्रभा पातु महेशानी विमला पातु सर्वदा।
नन्दिनी पातु सततं सुप्रभा सर्वदावतु ॥१४॥
विजया पातु सर्वत्र देव्यङ्गे नव शक्तयः।
शक्तयः पातु सततं मुद्राः पातु सदा मम ॥१५॥
जया पातु सदा सूक्ष्मा विशुद्धा पातु सर्वदा।
जयदुर्गा सदा पातु मर्द्दिनी रक्षयेत् सदा ॥१६॥
योगिन्यः पान्तु सततं खेचर्यः पान्तु सर्वदा।
डाकिन्यः पान्तु सततं सिद्धा पान्तु सदा मम।
सर्वत्र सर्वदा पातु देवी महिषमर्द्दिनी ॥१७॥
इति ते कथितं दिव्यं कवचं सर्वकामदम्।
यत्र तत्र न वक्तव्यं गोपितव्यं प्रयत्नतः ॥१८॥

इति विश्वसारतन्त्रे महिषमर्द्दिनीकवचं समाप्तम्



## अथ भैरवीस्तोत्रम्

स्तुत्यानया त्वां त्रिपुरे! स्तोष्येऽभीष्टफलाप्तये।
यया ब्रजन्ति तां लक्ष्मीं मनुजः सुरपूजिताम् ॥१॥
ब्रह्मादयः स्तुतिशतैरपि सूक्ष्मरूपां
जानन्ति नैव जगदादिमनादिमूर्त्तिम्।
तस्माद्वयः कुचनतां नव कुङ्कुमाभां
स्थूला स्तुमः सकलवाङ्मयमातृभूताम् ॥२॥
सद्यः समुद्यतसहस्रदिवाकराभां
विद्याक्षसूत्रवरदाभयचिह्नहस्ताम्।
नेत्रोत्पलैस्त्रिभिरलङ्कृतवक्त्रपद्मां
त्वां तारहाररुचिरां त्रिपुरे भजामः ॥३॥
सिन्दूरपूररुचिरं कुचभारनम्रं
जन्मान्तरेषु कृतपुण्यफलैकगम्यम्।

अन्योन्यभेदकलहा कुलमानसास्ते
जानन्ति किं जड़धियस्तव रूपमम्ब ॥४॥
स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति
सूक्ष्मां वदन्ति वचसामधिवासमन्ये।
त्वां मूलमाहुरपरे जगतां भवानि
मन्यामहे वयमपारकृपाम्बराशीम् ॥५॥
चन्द्रावतंसकलितां शरदिन्दुशुभ्रां
पञ्चाशदक्षरमयीं हृदि भावयन्ति।
त्वां पुस्तकं जपवटीममृताढ्यकुम्भं
व्याख्याञ्च हस्तकमलैर्दधतीं त्रिनेत्राम् ॥६॥
शम्भुस्त्वमद्रितनयाकलितार्द्धभागो
विष्णुस्त्वमम्बकमलापरिबद्धदेहः।
पद्मोद्भवस्त्वमसि वागधिवासभूमि-
स्तेषां क्रियाश्च जगति त्रिपुरे त्वमेव ॥७॥
आश्रित्य वाग्भवभवांश्चतुरः परादीन्
भावान् पदेषु विहितान् समुदीरयन्तीम्।
कण्ठादिभिश्च करणैः परदेवतां त्वाम्
सच्चिन्मयीं हृदि कदापि न विस्मरामि ॥८॥
आकुञ्च्य वायुमवजित्य च वैरिषट्क-
मालोक्य निश्चलधिया निज नासिकाग्रम्।
ध्यायान्ति मूर्ध्नि कलितेन्दुकलावतंसं,
तद्रूपमम्ब! कृतिनस्तरुणार्कमित्रम् ॥९॥
त्वं प्राप्य मन्मथरिपोर्वपुरर्द्धभागं
सृष्टिं करोमि जगतामिति वेदवादः।
सत्यं तदद्रितनये जगदेकमात-
र्नो चेदशेषजगतः स्थितिरेव न स्यात् ॥१०॥
पूजां विधाय कुसुमैः सुरपादपानां
पीठे तवाम्ब कनकाचलगह्वरेषु।
गायन्ति सिद्धवनिताः सह किन्नरीभि-
रास्वादितासववसारुणनेत्रपद्माः ॥११॥
विद्युद्विलासवपुषः श्रियमुद्वहन्तीं
यान्तीं स्ववासभवनाच्छिवराजधानीम्।

सौषुम्नवर्त्मकमलानि विकाशयन्तीं
देवीं भजे हृदि परामृतषिक्तगात्रीम् ॥१२॥
आनन्दजन्मभवनं भवनं श्रुतीनां
चैतन्यमात्रतनुमम्ब तवाश्रयामि।
ब्रह्मेशविष्णुभिरुपासितपादपद्मां
सौभाग्यजन्मवसतिं त्रिपुरे यथावत् ॥१३॥
शब्दार्थभाविभुवनं सृजतीन्दुरूपा
या तद्बिभर्त्ति पुनरर्कतनुस्वशक्त्या।
वह्न्यात्मिका हरति तत्सकलं युगान्ते
तां शारदां मनसि जातु न विस्मरामि ॥१४॥
नारायणीति नरकार्णवतारिणीति
गौरीति खेदशमनीति सरस्वतीति।
ज्ञानप्रदेति नयनत्रयभूषितेति
त्वामद्रिराजतनये बहुधा भणन्ति ॥१५॥
ये स्तुवन्ति जगन्मातः श्लोकैर्द्वादशभिः क्रमात्।
त्वामम्ब प्राप्य वाक्सिद्धिं प्राप्नुयुस्ते परां गतिम् ॥१६॥

इति भैरवीतन्त्रे भैरवीस्तवराजः समाप्तः



## अथ भैरवीकवचम्

### देव्युवाच

भैरव्याः सकला विद्याः श्रुताश्चाधिगता मया।
साम्प्रतं श्रोतुमिच्छामि कवचं यत् पुरोदितम् ॥१॥
त्रैलोक्यविजयं नाम शस्त्रास्त्रविनिवारकम्।
त्वत्तः परतरो नाथ! कः कृपां कर्त्तुमर्हति ॥२॥

### ईश्वर उवाच

शृणु पार्वति वक्ष्यामि सुन्दरि प्राणवल्लभे!।
त्रैलोक्यविजयं नाम कवचं मन्त्रविग्रहम् ॥३॥
पठित्वा धारयित्वेदं त्रैलोक्यविजयी भवेत्।
जघान सकलान् दैत्यान् यद्धृत्वा मधुसूदनः ॥४॥

ब्रह्मा सृष्टिं वितनुते यद्वा त्वाभीष्टदायकम्।
धनाधिपः कुबेरोऽपि वासवस्त्रिदशेश्वरः ॥५॥
यस्य प्रसादादीशोऽहं त्रैलोक्यविजयी विभुः।
न देयं परशिष्येभ्योऽसाधकेभ्यः कदाचन ॥६॥
पुत्रेभ्य किमुतान्येभ्यो दत्त्वा मृत्युमवाप्नुयात्।
भैरव्याः कवचस्य ऋषिर्दक्षिणामूर्त्तिरिव च ॥७॥
विराट्छन्दो जगद्धात्री देवता बालभैरवी।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥८॥
अधरो बिन्दुमानाद्यः कामः शक्री शशीयुतः।
भृगुर्मनुस्वरयुतः सर्गी बीजत्रयात्मिका ॥९॥
बालैषा मे शिरः पातु बिन्दुनादयुतापि सा।
भालं पातु कुमारी सा सर्गहीना कुमारिका ॥१०॥
दृशौ पातु च वाग्बीजं कर्णयुग्मं सदावतु।
कामबीजं सदा पातु घ्राणयुग्मं सदावतु ॥११॥
सरस्वतीप्रदा बाला जिह्वां पातु शुचिप्रभा।
हसैं कण्ठं हसकलरीं स्कन्धं पातु हसौर्भुजौ ॥१२॥
पञ्चमी भैरवी पातु करौ ह्सरैं सदावतु।
हृदयं हसकलरीं वक्षः पातु हसरौः स्तनौ ॥१३॥
पातु मां भैरवी देवी चैतन्यरूपिणी मम।
हंस्त्रैं पातु सदा पार्श्वयुग्मं हसकलरीं सदा ॥१४॥
कुक्षिं पातु हसौर्मध्यं भैरवी भुवि दुर्लभा।
ऐं ईं औं मे मध्यदेशं बीजविद्या सदावतु ॥१५॥
हसैं पृष्ठं सदा पातु नाभिं हसकलरीं सदा।
पातु हसौः कटिदेशं षट्कूटा भैरवी मम ॥१६॥
हसरैं सक्थिनी पातु हसकलरीं सदावतु।
गुह्यदेशं हेसौः पातु जानुनी भैरवी मम ॥१७॥
सम्पत्प्रदा सदा पातु हसैं जङ्घे हसरीं पदम्।
पातु हसौः सर्वदेहं भैरवी सर्वदावतु ॥१८॥
हसैं मामवतु प्राच्यां हसकलरीं पावकेऽवतु।
हसौः मे दक्षिणे पातु भैरवी चक्रसंस्थिता ॥१९॥
ह्रीं क्लीं ब्लूं मां सदा पातु नैर्ऋत्यां चक्रभैरवी।
हसैं हसकलह्रीं हसरौं पश्चिमे पातु भैरवी ॥२०॥

क्रीं क्रीं क्रीं पातु वायव्ये हूं हूं पातु सदोत्तरे।
ह्रीं ह्रीं पातु सदैशान्ये दक्षिणे कालिकेऽवतु ॥२१॥
ऊर्ध्वं प्रागुक्तबीजानि रक्षन्तु मामधःस्थले।
दिग्विदिक्षु स्वाहा पातु कालिका खड्गधारिणी ॥२२॥
ॐ ह्रीं स्त्रीं हुं फट् सा तारा सर्वत्र मां सदावतु।
संग्रामे कानने दुर्गे तोये तरङ्गदुस्तरे ॥२३॥
खड्गकर्त्रीधरा सोग्रा सदा मां परिरक्षतु।
इति ते कथितं देवि सारात्सारतरं महत् ॥२४॥
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम्।
य पठेत्प्रयतो भूत्वा पूजायाः फलमाप्नुयात् ॥२५॥

इति रुद्रयामले देवीश्वरसंवादे त्रैलोक्यविजयं नाम भैरवीकवचं समाप्तम्

●

## कालीस्तवः

श्रीमहाकाल उवाच

कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तं
बीजन्ते मातरेतत्त्रिपुरवधू त्रिःकृतं ये जपन्ति।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम् ॥१॥
ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि
द्वन्द्वन्ते मन्दचेता यदि जपति जनो वारमेकं कदाचित्।
जित्वा वाचामधीशं धनदमपि चिरं मोहयन्नम्बुजाक्षी-
वृन्दं चन्द्रार्द्धचूड़े प्रभवति स महाघोरबाणावतंसे ॥२॥
ईशो वैश्वानरस्थः शशवरविलसद्वामनेत्रेण युक्तो
बीजन्ते द्वन्द्वमन्यद्विगलितचिकुरे कालिके ये जपन्ति।
द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति
सृक्वद्वन्द्वास्त्रधाराद्वयधरवदने दक्षिणे कालिकेति ॥३॥
ऊर्ध्वे वामे कृपाणं करकमलतले छिन्नमुण्डं तथाधः
सव्ये चाभिर्वरञ्च त्रिजगदधहरे दक्षिणे कालिके च।
जप्त्वैतन्नाम ये वा तव मनुविभवं भावयन्त्ये तदम्ब
तेषामष्टौ करस्थाः प्रकटितवदने सिद्धयन्त्र्यम्बकस्य ॥४॥

वर्गाद्यं वह्निसंस्थं विधुरतिवलितं तत्त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वञ्च पश्चात् स्मितमुखि तदधष्टद्वयं योजयित्वा।
मातर्षे ये जपन्ति स्मरहरमहिले! भावयन्तः स्वरूपं
ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति ॥५॥
प्रत्येकं वा त्रयं वा द्वयमपि च परं बीजमत्यन्तगुह्यं
तन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति।
तेषां नेत्रारविन्दे विहरति कमला वक्त्रशुभ्रांशुबिम्बे
वाग्देवी देवि मुण्डस्रगतिशयलसत् कण्ठिपीनस्तनाढ्ये ॥६॥
गतासूनां बाहुप्रकरकृतकाञ्चीपरिलसन्
नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम्।
श्मशानस्थे तल्पे शवहृदि महाकालसुरत-
प्रसक्तां त्वां ध्यायञ्जननि जड़चेता अपि कविः ॥७॥
शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिकरैः
परं सङ्कीर्णायां प्रकटितचितायां हरवधूम्।
प्रविष्टां सन्तुष्टामुपरिसुरतेनातियुवतीं
सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभरः ॥८॥
वदामस्ते किं वा जननि! वयमुच्चैर्जडधियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम्।
तथापि त्वद्भक्तिर्मुखरयति चास्माकमसि ते
तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः ॥९॥
समन्तादापीनस्तनजघनधृग्यौवनवती-
रतासक्तो नक्तं यदि जपति भक्तस्तव मनूम्।
विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः
समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥१०॥
समाः सुस्थीभूतां जपति विपरीतां यदि सदा
विचिन्त्य त्वां ध्यायन्नतिशयमहाकालसुरताम्।
तदा तस्य क्षोणीतलविहरमाणस्य विदुषः
कराम्भोजे वश्या हरवधू महासिद्धिनिवहाः ॥११॥
प्रसूते संसारं जननि! जगतीं पालयति च
समस्तं क्षित्यादि प्रलयसमये संहरति च।
अतस्त्वं धातापि त्रिभुवनपतिः श्रीपतिरपि
महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥१२॥

अनेके सेवन्ते भवदधिकगीर्वाणनिवहान्
विमूढास्ते मातः किमपि न हि जानन्ति परमम् ।
समाराध्यामाद्यां हरिहरविरिञ्च्यादिविबुधैः
प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम् ॥१३॥
धरित्रीकीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणी गिरीशरमणी कालि सकलम् ।
स्तुतिः का ते मातस्तव करुणया मामगतिकं
प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥१४॥
श्मशानस्थं सुस्थो गलितचिकुरो दिक्पटधरः
सहस्रस्त्वर्काणां निजगलितवीर्येण कुसुमम् ।
जपं स्वत् प्रत्येकं मनुमपि तव ध्याननिरतो
महाकालि! स्वैरं स भवति धरित्री परिवृढः ॥१५॥
गृहे सम्मार्जन्या परिगलितवीर्यं हि चिकुरं
समूलं मध्याह्ने वितरति चितायां कुजदिने ।
समुच्चार्य प्रेम्णा मनुमपि सकृत्कालि सततं
गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥१६॥
स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायं ध्यायं जपति यदि भक्तस्तव मनूम् ।
स गन्धर्वश्रेणीपतिरपि कवित्वामृतनदी
न दीनः पार्यन्ते परमपदलीनः प्रभवति ॥१७॥
त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरसलावण्यनिरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्दनिरतो
जनो यो ध्याये त्वा मयि जननि स स्यात्स्मरहरः ॥१८॥
सलोमास्थि स्वैरं पललमपि मार्जारमसिते
परञ्चोष्ट्रं मेषं नरमहिषयोश्छागमपि वा ।
बलिन्ते पूजायामपि वितरतां मर्त्त्यवसतां
सतां सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥१९॥
वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो
दिवा मातर्युष्मच्चरणयुगलध्याननिपुणः ।
परं नक्तं नग्नो निधुवनविनोदेन च मनुं
जपेल्लक्षं स स्यात्स्मरहरसमानः क्षितितले ॥२०॥

इदं स्तोत्रं मातस्तव मनुसमुद्धारणजनुः
स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् ।
निशार्द्धे वा पूजासमयमधि वा यस्तु पठति
प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥२१॥
कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिः ।
रिपुः कारागारं कलयति च तं केलिकलया
चिरं जीवन्मुक्तः स भवति च भक्तः प्रतिजनुः ॥२२॥

इति वीरतन्त्रे परमरहस्ये स्वरूपाख्यस्तोत्रं समाप्तम्



## अथ शिवस्तवः

धरापोऽग्निमरुद्व्योममखेशेन्द्वर्कमूर्त्तये ।
सर्वभूतान्तरस्थाय शङ्कराय नमो नमः ॥१॥
श्रुत्यन्तःकृतवासाय श्रुतये श्रुतजन्मने ।
अतीन्द्रियाय महसे शाश्वताय नमो नमः ॥२॥
स्थूलसूक्ष्मविभागाभ्यामनिर्देश्याय शम्भवे ।
भवाय भवभूताय दुःखहन्त्रे नमोऽस्तु ते ॥३॥
तर्कागमादिभूताय तपसां फलदायिने ।
चतुर्वर्गवदान्याय सर्वज्ञाय नमो नमः ॥४॥
आदिमध्यान्तशून्याय निरस्ताशेषभीतये ।
योगिध्येयाय महते निर्गुणाय नमो नमः ॥५॥
विश्वात्मनेऽविचिन्त्याय विलसच्चन्द्रमौलये ।
कन्दर्पदर्पनाशाय कालहन्त्रे नमो नमः ॥६॥
विषाशनाय विहरद्वृषस्कन्धमुपेयुषे ।
सरिद्धामसमाबद्धकपर्दाय नमो नमः ॥७॥
शुद्धाय शुद्धभावाय शुद्धानामन्तरात्मने ।
पुरान्तकाय पूर्णाय पुण्यनाम्ने नमो नमः ॥८॥
तुष्टाय निजभक्तानां भुक्तिमुक्तिप्रदायिने ।
विवाससेऽनिवासाय विश्वशास्त्रे नमो नमः ॥९॥
त्रिमूर्त्तेर्मूलभूताय त्रिनेत्रायादिशम्भवे ।
त्रिधाम्नां धामरूपाय जन्मघ्नाय नमो नमः ॥१०॥

देवासुरशिरोरत्नकिरणारुणिताङ्घ्रये ।
कान्ताय निजकान्तायै दत्तार्द्धाय नमो नमः ॥११॥
स्तोत्रेणानेन पूजायां प्रीणयेज्जगतां पतिम् ।
भुक्तिमुक्तिप्रदं भक्त्या सर्वज्ञं परमेश्वरम् ॥१२॥
तस्यासाध्यं त्रिभुवने न किञ्चिदपि वर्त्तते ।
ऐहिकं किं फलं तत्र मुक्तिरेव करे स्थितः ॥१३॥

इति शिवस्तोत्रं समाप्तम्



## अथ शिवकवचम्

श्रीभगवानुवाच

प्रसादमन्त्रकवचस्य वामदेवऋषिः स्मृतः ।
पङ्क्तिश्छन्दश्च देवेशि सदाशिवोऽत्र देवता ।
साधकाभीष्टसिद्धौ च विनियोगः प्रकीर्त्तितः ॥१॥
ॐ शिरो मे सर्वदा पातु प्रसादाख्यः सदाशिवः ।
षडक्षरस्वरूपो मे वदनन्तु महेश्वरः ॥२॥
अष्टाक्षरशक्तिरुद्धश्चक्षुषी मे सदावतु ।
पञ्चाक्षरात्मा भगवान् भुजौ मे परिरक्षतु ॥३॥
मृत्युञ्जयस्त्रिबीजात्मा आयु रक्षतु मे सदा ।
वटमूले समासीनो दक्षिणामूर्त्तिरव्ययः ॥४॥
सदा मां सर्वतः पातु षट्त्रिंशार्णस्वरूपधृक् ।
द्वाविंशार्णात्मको रुद्रः कुक्षि मे परिरक्षतु ॥५॥
त्रिवर्णात्मा नीलकण्ठः कण्ठं रक्षतु सर्वदा ।
चिन्तामणिर्बीजरूपो अर्द्धनारीश्वरो हरः ॥६॥
सदा रक्षतु मे गुह्यं सर्वसम्पत्प्रदायकः ।
एकाक्षरः स्वरूपात्मा कूटरूपी महेश्वरः ॥७॥
मार्त्तण्डभैरवो नित्यं पादौ मे परिरक्षतु ।
तुम्बुराख्यो महाबीजस्वरूपस्त्रिपुरान्तकः ॥८॥
सदा मां रणभूमौ च रक्षतु त्रिदशाधिपः ।
ऊर्ध्वमूर्द्धनमीशानो मम रक्षतु सर्वदा ॥९॥
दक्षिणस्यां तत्पुरुषोऽव्यान्मे गिरिनायकः ।
अघोराख्यो महादेवः पूर्वस्यां परिरक्षतु ॥१०॥

वामदेवः पश्चिमस्यां सदा मे परिरक्षतु ।
उत्तरस्यां सदा पातु सद्योजातस्वरूपधृक् ॥११॥
इत्थं रक्षाकरं देवि कवचं देवदुर्लभम् ।
प्रातःकाले पठेद्यस्तु सोऽभीष्टफलमाप्नुयात् ॥१२॥

इति भैरवतन्त्रे सदाशिवकवचं समाप्तम्



## अथ बटुकस्तोत्रम्

श्रीभगवान् उवाच

शृणु देवि महामन्त्रमापदुद्धारहेतुकम् ।
सर्वदुःखप्रशमनं सर्वशत्रुनिर्वहणम् ॥१॥
अपस्मारादिरोगाणां ज्वरादीनां विशेषतः।
नाशनं स्मृतिमात्रेण मन्त्रराजमिमं प्रिये ॥२॥
ग्रहराजभयानाञ्च नाशनं सुखवर्द्धनम् ।
स्नेहाद्वक्ष्यामि ते मन्त्रं सर्वसारमिमं प्रिये ॥३॥
सर्वकामार्थदं देवि राज्यभोगप्रदं नृणाम् ।
आपदुद्धारणं मन्त्रं वक्ष्यामीति विशेषतः ॥४॥
प्रणवं पूर्वमुच्चार्य देवीप्रणवमुद्धरेत् ।
बटुकायेति वै पश्चादापदुद्धरणाय च ॥५॥
कुरुद्वयं ततः पश्चाद् बटुकाय पुनः क्षिपेत् ।
देवीप्रणवमुद्धृत्य मन्त्रोद्धारमिमं प्रिये ॥६॥
मन्त्रोद्धारमिमं देवि त्रैलोक्यस्यापि दुर्लभम् ।
धर्मार्थकामदं मन्त्रं राज्यभोगप्रदं नृणाम् ॥७॥
अप्रकाश्यमिमं मन्त्रं सर्वशक्तिसमन्वितम् ।
स्मरणादेव मन्त्रस्य भूतप्रेतपिशाचकाः ।
विद्रवन्ति भयार्त्ता वै कालरुद्रादिव प्रजाः ॥८॥
पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।
नाग्निचौरभयं वापि ग्रहराजभयं तथा ॥९॥
न च मारीभयन्तस्य न च भूतभयं तथा ।
न शत्रुभ्यो भयं तस्य सर्वत्र सुखवान् भवेत् ॥१०॥

# अथ बटुकभैरवस्तवराजः

श्रीभगवानुवाच

यस्तु सङ्कीर्त्तयेदेतत् सर्वदुष्टनिबर्हणम् ।
सर्वान् कामानवाप्नोति साधकः सिद्धिमेव च ॥१॥
शृणु देवि! प्रवक्ष्यामि भैरवस्य महात्मनः ।
आपदुद्धारकस्येह नामाष्टशतमुत्तमम् ॥२॥
यानि संकीर्त्तयेन्मर्त्यः सर्वदुःखविवर्जितः ।
सर्वपापहरं पुण्यं सर्वापद्विनिवारणम् ॥३॥
सर्वकामार्थदं देवि साधकानां सुखावहम् ।
देहाङ्गन्यासनञ्चैव पूर्वं कुर्यात् समाहितः ॥४॥
भैरवं मूर्ध्नि विन्यस्य ललाटे भीमदर्शनम् ।
अक्ष्णोर्भूताश्रयं न्यस्य वदने तीक्ष्णदर्शनम् ॥५॥
क्षेत्रपं कर्णयोर्मध्ये क्षेत्रपालं हृदि न्यसेत् ।
क्षेत्राख्यं नाभिदेशे तु कट्यां सर्वाघनाशनम् ॥६॥
त्रिनेत्रभूर्वा विन्यस्य जङ्घयो रक्तपाणिकम् ।
पादयोर्देवदेवेशं सर्वाङ्गे बटुकं न्यसेत् ॥७॥
एवं न्यासविधिं कृत्वा तदनन्तरमुत्तमम् ।
पठेदेकमनाः स्तोत्रं नामाष्टशतसंज्ञकम् ॥८॥
नामाष्टशतकस्यापि छन्दोऽनुष्टुबुदाहृतम् ।
बृहदारण्यको नाम ऋषिश्च परिकीर्त्तितः ॥९॥
देवता कथितो चेह सद्भिर्वटुकभैरवः ।
सर्वकामार्थसिद्ध्यर्थे विनियोगः प्रकीर्त्तितः ॥१०॥
भैरवो भूतनाथश्च भूतात्मा भूतभावनः ।
क्षेत्रदः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्रियो विराट् ॥११॥
श्मशानवासी मांसाशी खर्पराशी मखान्तकृत् ।
रक्तपः प्राणपः सिद्धः सिद्धिदः सिद्धसेवितः ॥१२॥
करालः कालशमनः कलाकाष्ठातनुः कविः ।
त्रिनेत्रो बहुनेत्रश्च तथा पिङ्गललोचनः ॥१३॥
शूलपाणिः खड्गपाणिः कङ्काली धूम्रलोचनः ।
अभीरुर्भैरवो भीमो भूतपो योगिनीपतिः ॥१४॥

धनदो धनहारी च धनदः प्रतिभानवान्।
नागहारो नागकेशो व्योमकेशः कपालभृत् ॥१५॥
कालः कपालमाली च कमनीयः कलानिधिः।
त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपात् ॥१६॥
त्रिवृत्तनयनो डिम्भः शान्तः शान्तजनप्रियः।
बटुको बटुकेशश्च खट्वाङ्गवरधारकः ॥१७॥
भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः।
धूर्त्तो दिगम्बरः शौरिर्हरिणः पाण्डुलोचनः ॥१८॥
प्रशान्तः शान्तिदः शुद्धः शङ्करः प्रियबान्धवः।
अष्टमूर्त्तिर्निधीशश्च ज्ञानचक्षुस्तमोमयः ॥१९॥
अष्टाधारः सर्पयुक्तः शशी विषधरः शिवः।
भूधरो भूतराधीशो भूपतिर्भूतधारकः ॥२०॥
कङ्कालधारी मुण्डी च नागयज्ञोपवीतवान्।
जृम्भणो मोहनः स्तम्भो मारणः क्षोभणस्तथा ॥२१॥
शुद्धनीलाञ्जनप्रख्यदेहो मुण्डविभूषितः।
बलिभुग्बलिभूतात्मा कामी कामः पराक्रमः ॥२२॥
सर्वापत्तारको दुर्गो दुष्टभूतनिषेवितः।
काली कलानिधिः कान्तः कामिनी वशकृद्वशी ॥२३॥
सर्वसिद्धिप्रदो वैद्यः प्रभविष्णुः प्रभाववान्।
अष्टोत्तरशतं नाम भैरवस्य महात्मनः ॥२४॥
मया ते कथितं देवि रहस्यं सर्वकामदम्।
य इदं पठति स्तोत्रं नामाष्टशतमुत्तमम् ॥२५॥
न तस्य दुरितं किञ्चिन्न रोगेभ्यो भयं तथा।
न शत्रुभ्यो भयं किञ्चित्प्राप्नोति मानवः क्वचित् ॥२६॥
पातकानां भयं नैव पठेत् स्तोत्रमनन्यधीः।
मारीभये राजभये तथा चौराग्निजे भये ॥२७॥
औत्पातिके महाघोरे तथा दुःस्वप्नजे भये।
बन्धने च महाघोरे पठेत् स्तोत्रं समाहितः ॥२८॥
सर्वे प्रशमनं यान्ति भयाद् भैरवकीर्त्तनात्।
एकादशसहस्रन्तु पुरश्चरणमिष्यते ॥२९॥
त्रिसन्ध्यं यः पठेद्देवि! संवत्सरमतन्द्रितः।
स सिद्धिं प्राप्नुयादिष्टां दुर्लभामपि मानुषः ॥३०॥

षण्मासान् भूमिकामस्तु स जप्त्वा लभते महीम्।
राजा शत्रुविनाशाय जपेन्मासाष्टकं पुनः ॥३१॥
रात्रौ वारत्रयञ्चैव नाशयत्येव शात्रवान्।
जपेन्मासत्रयं रात्रौ राजानं वशमानयेत् ॥३२॥
धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः।
पठेद्वारत्रयं यद्वा वारमेकं तथा निशि ॥३३॥
धनं पुत्रांस्तथा दारान् प्राप्नुयान्नात्र संशयः।
ध्यानं वक्ष्यामि देवस्य यथा ध्यात्वा पठेन्नरः ॥३४॥
शुद्धस्फटिकसकाशं सहस्रादित्यवर्चसम्।
अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥३५॥
भुजङ्गमेखलं देवमग्निवर्णं शिरोरुहम्।
दिगम्बरं कुमारीशं बटुकाख्यं महाबलम् ॥३६॥
खट्वाङ्गमसिपाशञ्च शूलञ्चैव तथा पुनः।
डमरुञ्च कपालञ्च वरदं भुजगं तथा ॥३७॥
नीलजीमूतसङ्काशं नीलाञ्जनचयप्रभम्।
दंष्ट्राकरालवदनं नूपुराङ्गदसङ्कुलम् ॥३८॥
आत्मवर्णसमोपेतसारमेयसमन्वितम्।
ध्यात्वा जपेत्सुसंहृष्टः सर्वान् कामानवाप्नुयात् ॥३९॥
ॐ करकलितकपालं कुण्डलीदण्डपाणि-
स्तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याः विघ्नविच्छेदहर्त्ता
जयति बटुकनाथः सिद्धिदः साधकानाम् ॥४०॥

इति विश्वसारे आपदुद्धारकल्पे बटुकभैरवस्तवराजः समाप्तः

●

## अथ योगप्रक्रिया

(नियम है कि योगक्रिया विना गुरु के नहीं करनी चाहिये; अतएव यहाँ अनुवाद करने का कोई प्रयोजन नहीं है)

गौतमीये—

गौतम उवाच

देवर्षे योगयुक्तात्मन् योगानुभवदर्शक!।
सांख्ययोगविशेषज्ञ कर्मयोगनिषेवक॥

विना योगं न सिद्ध्येत्तु कुण्डलीचंक्रमः प्रभो।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो! ।
तावत् किञ्चिन्न सिद्ध्यन्ते यन्त्रमन्त्रार्चनादिकम् ॥
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः।
तदा प्रसादमायान्ति यन्त्रमन्त्रार्चनादयः।
शिववद्विहरेल्लोकेष्वष्टैश्वर्यसमन्वितः ।
योगयोगाद्भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डितः ॥
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः।
तस्मात् कार्यं परं योगं कथयस्व मुनीश्वर! ।
मुक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले।
जीवन्मुक्तश्च देहान्ते निर्वाणपदमाप्नुयात् ॥

नारद उवाच

कथयामि तव स्नेहात् योगयोग्योऽसि गौतम!
संसारोत्तारणे युक्तिर्योगशब्देन कथ्यते।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः।
तव स्नेहात्समाख्याता योगे विघ्नकरास्त्विमे।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः ।
योगाङ्गैरेभिर्निर्जित्य योगिनो योगमाप्नुयुः।
यमं नियममासनप्राणायामौ ततः परम्।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना।
अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने।
अहिंसासत्यमस्त्येयब्रह्मचर्यं दयार्जवम्।
क्षमा धृतिर्मिताहारः शौचञ्चेति यदा दश ॥
तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।
सिद्धान्तश्रवणञ्चैव ह्रीमतिश्च जपो हुतम्।
दशैते नियमा प्रोक्ता योगशास्त्रविशारदैः ॥
आसननि पूर्वमुक्तानि।
इड़याकर्षयेद्वायुं बाह्यं षोडशमात्रया।
धारयेत्पूरितं योगी चतुःषष्ट्या च मात्रया ॥
सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः ॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयोभूयः क्रमात्तस्य व्यत्ययेन समाचरेत् ॥
मात्रावृद्धिक्रमेणैव सम्यक् द्वादश षोडश ।
प्राणायामो हि द्विविधः सगर्भोऽगर्भ एव च ।
जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ॥
तदपेतं विगर्भञ्च प्राणायामं परे विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यावच्छीलनमीष्यते ॥
इन्द्रियाणां विचरतां विशेषेषु निरर्गलम् ।
बलादाहरणन्तेभ्यः प्रत्याहारोऽभिधीयते ।
अङ्गुष्ठगुल्फजानूरूसीमनीलिङ्गनाडिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां तथा नसि ॥
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ।
समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ।
इत्यादिकथितं विप्र कामादिषट्कनाशनम् ।
इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं मुने ।
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड़यो मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ।
इड़ा यामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।
दाडिमी कुसुमप्रख्या विषाख्या मुनिभिः स्मृताः ।
मेरुमध्ये स्थिता या तु मूलादाब्रह्मविग्रहा ।
सर्वतेजोमयी सा तु सुषुम्ना बहुरूपिणी ।
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥

सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
विसर्गाद्बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्यसमप्रभम् ।
तदूर्ध्वे कामबीजन्तु कलशान्तीन्दुनादकम् ।
तदूर्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ।
तद्बाह्ये हेमवर्णानां रसवर्णचतुर्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
वादिलान्तषड़र्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ।
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥
तदूर्ध्वे नाभिदेशे तु मणिपूरं महत्प्रभम् ।
मेघाभं विद्युदाभञ्च रत्नतेजोमयं ततः ।
तत्पद्मं मणिवद्भिन्नं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वलोकैककारणम् ।
तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ॥
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ।
तन्मध्ये बाणलिङ्गन्तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ।
तेनानाहतपद्मं तन्मुनिभिः परिकीर्त्तिते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ।
तदूर्ध्वन्तु विशुद्धाख्यं दलं षोडशपङ्कजम् ।
स्वरैः षौडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ।
विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धिं पद्ममाख्यातं आकाशाख्यं महत्परम् ।
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाधिष्ठितं परम् ।
इक्षवर्ण समायुक्तं द्विदलं शुक्लभास्वरम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ।
कैलाशाख्यं तदूर्ध्वे तु बोधनीन्तु तदूर्ध्वतः ।

एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रते।
सहस्राराम्बुजं बिन्दुस्थानं तदूर्ध्वमीरितम्॥
इत्येतत् कथितं सर्वं योगमार्गमनुत्तमम्।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः॥
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत्।
लिङ्गभेदे क्रमेणैव बिन्दुचक्रन्तु प्रापयेत्॥
शम्भुना तां पराशक्तिमेकीभावं विचिन्तयेत्।
पाययित्वा च तां शक्तिं कृष्णाख्यां योगसिद्धिदाम्।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया॥
आनयेत्तेन मार्गेण मूलाधारं ततो सुधीः।
एवमभ्यस्यमानस्य अहन्यहनि मारुतम्।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिद्ध्यन्ति नान्यथा॥
ये गुणाः सन्ति देवस्य पञ्चकृत्यविधायिनः।
ते गुणाः साधकवरे भवन्त्येव च नान्यथा।
इत्येतत् कथितं सर्वं वायोर्धारणमुत्तमम्।
इदानीं धारणाख्यान्तु शृणुष्वावहिता मुने॥
दिक्कालाद्यनवच्छिन्ने कृष्णे चेतो निधाय च।
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात्॥
अथवा समलं चित्तं यदा क्षिप्रं न सिध्यति।
तदावयवयोगेन योगी योगान् समभ्यसेत्।
पादाम्भोजे मनो दद्यान्नखकिञ्जल्कचित्रिते।
जङ्घायुग्मे तथारामकदलीकाण्डशोभिते।
ऊरूद्वये मत्तहस्तीकरदण्डसमप्रभे।
गङ्गागर्त्तगभीरे तु नाभौ सिद्धबिले ततः॥
उदरे वक्षसि तथा हारे श्रीवस्तकौस्तुभे।
पूर्णचन्द्रायुतप्रख्ये ललाटे चारुकुन्तले॥
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते।
सहस्रादित्यसङ्काशे किरीटकुण्डलद्वये॥
स्थाने नियोजयेन्मन्त्री विशुद्धः शुद्धचेतसा।
मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम्॥

**यावन्मनो लयं याति कृष्णे स्वात्मनि चिन्मये।**
**तावदिष्टमनुर्मन्त्री जपहोमं समभ्यसेत्।**
**अतः परं न किञ्चिच्च कृत्यमस्ति तथा हरेः।**
**विदिते परतत्त्वे तु समस्तैर्नियमैरलम्॥**
**तालवृन्तेन किं कार्यं लब्धे मलयमारुते।**
**कृष्ण इत्युपलक्षणम्।**

## ज्ञानयोगः

पृथिव्यप्तेजोवाय्वाकाशात्मकपञ्चभूतात्मकं शरीरम्। तत्र शरीरे सार्द्धकोटित्रयी नाडी सर्वाऽधोमुखी। तासु मुख्या दश—इडा पिङ्गला सुषुम्ना गान्धारी हस्तिजिह्वा पयस्विनी अनुकूला कुहूः शङ्खिनी चेति। तास्वपि मुख्यास्तिस्रः—इड़ा पिङ्गला सुषुम्ना चेति। तासु च मध्ये मेरुदण्डस्य वामे इडा शुक्लवर्णा च रूपिणी अमृतमयी शक्तिरूपा, दक्षिणे पिङ्गला रक्तवर्णा सूर्यरूपिणी विषमयी पुंरूपा। मेरुदण्डमध्ये सुषुम्ना सर्वतेजोमयी सान्ध्रा सोमसूर्याग्निरूपिणी। सा च शिफाभ्यां पादाङ्गुष्ठद्वयं संयुज्याऽधोमुखीभूय शिरसा मूलाधारस्थशिवलिङ्गाग्रपर्यन्तं व्याप्य तिष्ठति। सुषुम्नास्ये तान्यधोमुखानि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि षट्पद्मानि। यत्तु महीं मूलाधारे कमपि मणिपूरे हुतवहं मितं स्वाधिष्ठाने इत्यादि शङ्कराचार्यपद्ये द्वितीयपद्मस्य मणिपूरत्वकथनम्, तत् स्वाधिष्ठाने कं मणिपूरे हुतवहमिति व्यत्यासान्वयादविरुद्धं छन्दोनुरोधाच्च तथोक्तमिति तत्त्वम्। सुषुम्नामध्ये चित्राख्याऽधोमुखी नाड़ी अमृतस्राविणी सर्वदेवमयी विसर्गाद् बिन्दुपर्यन्तं व्याप्य तिष्ठति। विसर्गः प्रकृतिः। बिन्दुः पुमान्। षण्णां पद्मानां किञ्जल्कमध्ये शक्तिरूपाणि षट् त्रिकोणानि। तेषाञ्च मध्येऽधोमुखानि प्रेतरूपाणि सरन्ध्राणि शिवलिङ्गानि षट्। तेषु मध्ये मूलाधारे स्वयम्भुरनाहते बाणः। आज्ञाचक्रे ईश्वर इति लिङ्गत्रयं प्रधानम्। षट्पत्रेषु ब्रह्मविष्णुरुद्रेश्वरसदाशिवपरमशिवाख्याः षट्शिवाः। ब्रह्मादीनां मूर्त्तयस्तु पूर्वमुक्ताः।

गुदस्थानाद् द्व्यङ्गुलोपरि पीतं पार्थिवं पृथिवीयुक्तं वशषसयुक्तं चतुर्दलाढ्यं डाकिनीदेवताकं मूलाधारपद्मम्। आधारषट्कानां मूलत्वान्मूलाधारमुच्यते। तस्याधस्तेजसं सहस्रदलं रक्तवर्णं तत् किञ्जल्कमध्ये दलमध्ये च शक्तयो विद्युत्प्रभाः। तत्कर्णिकामध्यतश्च कुलदेवी मूलाधारपद्मकर्णिकान्तर्गतत्रिकोणाकारमहायोन्यन्तर्गताधोमुखस्वयम्भुलिङ्गं शङ्खाकारदक्षिणावर्त्तक्रमेण सार्द्धवेष्टनत्रयेणालिङ्ग्याधोमुखतया स्थित्वा सुषुम्नामुखं स्वमुखेनावृत्य स्थिता निद्राणा

प्रसुप्तभुजगाकारा तड़ित्कोटिप्रख्या नीवारशूकवत् तन्वी त्रिकोणस्थानलशिखोपरि स्थिता मूलविद्यामयी कुलकुण्डलिनी वर्त्तते। ततो हुङ्कारेण त्रिकोणमण्डलस्थाग्निना कुलकुण्डलिनीं सजागरां विधाय हंस इति मन्त्रेण सुषुम्नाविवरब्रह्मवर्त्मना चित्रानाड़िकया शिवलिङ्गरन्ध्रद्वारेण लिङ्गान्निष्क्रमया आधारपङ्कजस्य द्व्यङ्गुलोर्ध्वे आप्ये जलवति विद्युदाभे बभमयरलयुक्तषड्दले सावित्रीब्रह्मसहिते राकिनीदेवताके लिङ्गमूलस्थे स्वस्य लिङ्गस्याधिष्ठानतया स्वाधिष्ठाननामके पद्मे तां समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य स्वाधिष्ठानादेकादशाङ्गुलोपरि तेजसे तेजस्विनि नीलवर्णे डढणतथदधनपफयुक्तदशदलेन लक्ष्मीनारायणसहिते लाकिनीसहिते लाकिनीदेवताके नाभिमूलस्थे मणिपूरके पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य मणिपूराद् द्वादशाङ्गुलोपरि हृदयस्थे वायव्ये वायुमते रक्तवर्णे कखगघङचछजझञटठयुक्तद्वादशे दले पार्वतीशङ्करान्विते मध्यगतकाकिनीदेवताके कालरात्र्यादिशक्त्यावृत्ते नादोद्यानादियुक्तसूर्यबिम्बसहिते अनाहते पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्यानाहतादेकादशाङ्गुलोपरि कण्ठदेशस्थे आकाशमये आकाशवति धूम्रवर्णे अकारादिषोडशस्वरयुक्तषोडशदलेन मध्यगतशाकिनीदेवताके विद्येश्वरसहिते अमृतादिशक्तियुक्तबाह्यपत्रे चन्द्रबिम्बसहिते विशुद्धाख्ये पद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य विशुद्धपद्माच्चतुरङ्गुलोपरि भ्रूमध्यस्थे शुक्लवर्णे हक्षयुक्तदलद्वययुक्तहंसवतीक्षमासहितपार्श्वद्वयके मध्यस्थितहाकिनीदेवताके मालाधिष्ठिते आज्ञाचक्राख्यपद्मे समानीय तत्रत्यलिङ्गरन्ध्रेण लिङ्गं प्रवेशयित्वा ततो निर्गमय्य शिरःस्थितश्वेतसर्ववर्णयुक्तसहस्रदलयुक्तारुणकेशराधोमुखकमलकर्णिकान्तर्गतचक्रमण्डलमध्यस्थत्रिकोणान्तर्गतबिम्बरूपपरमशिवे महामायायुक्ते तत्रत्यलिङ्गं रन्ध्रद्वारेण तां कुलकुण्डलिनीं योजयेत्।

अयं षट्चक्रभेदप्रकारः। एवंक्रमेण कुलकुण्डलिनीं परमशिवे संयोज्य पुनस्तेनैव पथा व्युत्क्रमेण पद्मषट्कं विभिद्य शिवशक्तियोगजनितसुधाधाराप्लावितदेहः सन् पुनस्ताममृतलोलीभूतां मूलाधारमानयेदिति रहस्यार्थः। एतत्प्रमाणन्तु प्रागुक्तेषु समयातन्त्रोक्तान्तर्यागप्रकरणगौतमीयतन्त्रोक्तमन्त्रयोगप्रकरणशारदातिलकोक्तयोगप्रकरणसमयातन्त्रोक्तकर्मयोगप्रकरणेषु यथायथमालोकनीयम्। अधिकञ्च तन्त्रान्तरे—

**ध्यायेदाधारपद्मं स्फुरदरुणचतुःपत्रकं वादिसान्तै-**
**र्वर्णैः पीतं चतुर्भिर्युतमुपरि लसत्कर्णिकायां त्रिकोणे।**

शङ्खावर्त्तेभसार्द्धत्रिवलययुतया मण्डितं कुण्डलिन्या
बालार्कद्योतिबिम्बं तदुपरि मिलितां डाकिनीदेवताञ्च ॥
स्वाधिष्ठानं षड्दलोपेतमुद्युद्विद्युत्प्रख्यं वादिलान्तैश्च वर्णैः ।
युक्तं सावित्रीसहायं विरिञ्चिं ध्यायेदस्मिन् राकिनीदेवताञ्च ॥
नीलनीरदनिभे दशपत्रे डादिफान्तदशवर्णसमेते ।
चिन्तयेत्कमलया कमलाक्षं लाकिनीञ्च सहितां मणिपूरे ।
अनाहतं सरोरुहं तरुणरक्तसन्ध्यारुण-
प्रभापटलसङ्कुलं स्फुरत्पार्वतीशङ्करम् ।
प्रतिच्छदसमुल्लसद्द्विदलकादिठान्ताक्षरं
तदन्तरेऽपि चिन्तयेस्त्रिदशवन्दितां काकिनीम् ॥
तदुपरि विशुद्धाख्यां कुन्दावदातसमप्रभं
स्वरपरिणतं मध्ये पत्रं समुज्ज्वलकर्णिकम् ।
कमलममलं विद्येश्वरावपीह निवासिनौ स्थिरमति-
रधिष्ठात्रीं देवीं स्मरेदथ शाकिनीम् ।
आज्ञापुरं द्विदलकं शरदिन्दुकान्ति-
ज्योतिर्मयं सलिलपञ्चमहान्तयुक्तम् ।
श्रीबुद्धिशक्तिसहिता गुरुरत्र देवी
हाकिन्यमन्दनिजशक्तिपरप्रभावा ।
सरोरुहमधोमुखं प्रविलसत् सहस्रच्छदं
क्रमादरुणकेशरं प्रकरभास्वरं निर्मलम् ।
तदन्तरपि चिन्तयेदमृतरोचिषे मण्डले
पुराणपुरुषं परं परिगतं महामायया ॥

तथा—

शान्तिरूपं शिवाकारं सर्वाभ्यासनिजालयम् ।
गुदमेढ्रान्तरं देवि पञ्चाङ्गुलसमुच्छ्रितम् ॥
गुदमेकाङ्गुलं मध्ये द्विरङ्गुलविसारिणम् ।
तस्य मूले महायोनिस्त्रिकोणाकाररूपिणी ॥
सुषुम्ना योनिमध्यस्था तस्य मूले महेश्वरि ।
अधःपद्मं सहस्रारं कर्णिकाकेशरान्वितम् ॥
तेजसं रत्नवद्दीप्तं तद्दलस्थितशक्तिभिः ।

प्रतिकिञ्जल्कसंस्थाभिः शक्तिभिश्च युतं प्रिये।
कर्णिकामध्यतो देवि कुलदेवी च संस्थिता॥

तथा—

आधारपङ्कजं पीतं चतुष्पत्रं सुकेशरम्।
अधोमुखञ्च तन्मध्ये कुण्डली परमेश्वरी॥
स्वयम्भुमध्यगा चिन्त्या यादिवर्णैः समावृता।
पार्थिवं पङ्कजं ह्येतत् तस्याधः पङ्कजं परम्॥
तैजसं परमेशानि तन्मध्ये पीठशक्तयः।
निविष्टाहृष्टमनसो विद्युत्पुञ्जनिभाः स्मरेत्॥
तदूर्ध्वकर्णिकामध्ये विद्धि बिम्बं तदूर्ध्वगम्।
पूर्णपीठञ्च तन्मध्ये डाकिनी संस्थिता शिवे॥
आधारपङ्कजस्योर्ध्वे सार्द्धद्व्यङ्गुलकोपरि।
तैजसं साष्टपत्रञ्च पीतकर्णिकया युतम्॥
हृल्लेखा कर्णिकाध्ये स्थिता लङ्काधिदेवता।
एतस्माद् द्व्यङ्गुलादूर्ध्वं स्वाधिष्ठानं षडस्रकम्॥
आप्यञ्च राकिनीशक्तिः पूर्वाभिः शक्तिभिर्वृतम्।
ततश्च भावयेद्देवि नाभिमेकाङ्गुलोपरि॥
तत्पद्मं मणिपूरञ्च दशपत्रञ्च तैजसम्।
लाकिनीमध्यगं तच्च भ्रामर्यादिभिरावृतम्॥
ततो दशाङ्गुलादूर्ध्वे मणिपूराख्यपङ्कजात्।
पङ्कजं काकिनीमध्यं वायव्यं द्वादशारकम्॥
तत्रस्थकालरात्र्यादिशक्तिभिश्च समावृतम्।
तत्रस्थसूर्यबिम्बे च नादोद्यानादिपीठकम्॥
तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशारकम्।
मध्यगा शाकिनी बाह्यपत्रेषु परमेश्वरि॥
अमृताद्यास्तदाकाशं चन्द्रबिम्बं तदूर्ध्वतः।
कण्ठोर्ध्वे परमेशानि लम्बिका चतुरङ्गुले॥
आज्ञाधारं द्विपत्राब्जः हक्षद्विदलसंयुतम्।
हंसवती क्षमा पार्श्वद्वये मध्ये तु हाकिनी॥

अथात्र समाधिमुखसमाधानार्थमस्मत्प्रपञ्चः—

पृथ्व्याम्बुतेजोमरुद्व्योमरूपैः शरीरं कृतं पञ्चभिर्भाति भूतैः ।
तनौ सार्द्धकोटित्रयी तत्र नाड़ी स्थिताऽधोमुखी तासु मुख्या दश स्युः ॥
इडा पिङ्गलाख्या सुषुम्ना च गान्धारिका हस्तजिह्वा च पूषा च नाड़ी ।
पयस्विन्ययान्यानुकूला कुहूः शङ्खिनी चेति तासाञ्च तिस्रो वरेण्याः ॥
इडावामभागे स्थिता शुक्लवर्णाऽमृतात्मेन्दुरूपिण्यसौ शक्तिरूपा ।
तथा दक्षिणे पिङ्गला रक्तवर्णा विषात्मा च पुंरूपिणी सूर्यरूपा ॥
तथा मेरुदण्डस्य मध्ये सुषुम्ना स्थिता सर्वतेजोमयी रन्ध्रयुक्ता ।
असौ सोमसूर्याग्निरूपा शिफाभ्यां पदाङ्गुष्ठयुग्मेषु संयुज्य नम्रा ॥
स्थिताधारपद्मस्थितेशानलिङ्गाग्रपर्यन्तमावृत्य विद्योतमाना ।
अनुस्यूतपङ्केरुहश्रेणिकस्रग्गुणस्पर्द्धनार्द्धनावर्द्धमाना ॥
अथाधारकाधिष्ठिते पूरकनाहताख्ये विशुद्धं तथाज्ञापुरञ्च ।
इदं तत्र चक्राभिधाम्भोजषट्कं निबद्धं सुषुम्नाख्ययाऽधोमुखं सत् ॥
सुषुम्नान्तराले सुधास्राविणी सर्वदेवात्मिका नाड़िकान्यास्ति चित्रा ।
विसर्गादियं बिन्दुपर्यन्तमेका परिव्याप्य तिष्ठत्यतीवानुरूपा ॥
तथा षट् सरोजन्मकिञ्जल्कमध्ये त्रिकोणानि षट्शक्तिरूपाणि सन्ति ।
त्रिकोणान्तरे प्रेतरूपाणि रन्ध्रान्विताधोमुखानीशलिङ्गानि षड्वा ॥
अचैतन्यभाजाममीषार्णमध्ये शिवानामुभौ ब्रह्मविष्णूपदिष्टौ ।
परौ चापि रुद्रेश्वराख्यौ सदाशिवनामा परोऽन्यः पराख्यः शिवश्च ॥
गुदस्थानतो द्व्यङ्गुलोर्ध्वे सुपीतं कुमद्वापि सान्तार्णयुतैश्चतुर्भिः ।
दलैः शोभितं पार्थिवं डाकिनीदेवताकं तदाधारपद्मं पुरस्तात् ॥
अधस्तैजसं तस्य रक्तप्रभाकं दलानां सहस्रेण विभ्राजमानम् ।
लसद्विद्युदुद्योतितानेकशक्तिस्फुरन्मध्यकिञ्जल्कमेकं सरोजम् ॥
अधःकर्णिकामध्यतः शङ्खभङ्गीक्रमभ्राजिना दक्षिणावर्त्तनेन ।
प्रसुप्ताहिरूपा तड़ित्कोटिकान्तिः समालिङ्ग्य सार्द्धेन वेष्टत्रयेण ॥
तदाधारनामादिमाम्भोजमध्यस्फुरत्कर्णिकान्तर्निविष्टत्रिकोणाकृतिस्पृडम् ।
महायोनिमध्यस्थिताधोमुखोद्यत् स्वयम्भुप्रदख्यातलिङ्गम् ॥
सुषुम्नामुखं स्वाननेनाणुषज्य स्थिताधोमुखी चिन्तनीयैव निद्रावशा ।
पङ्क्नीवारशुकातितन्वी परं मूलविद्यामयी कुण्डलिनी ॥
ततस्था त्रिकोणस्थिताग्नेः शिखाभिः स्मरन् कूर्चबीजं विनिद्रां विदध्यात् ।
अथोऽहंसमुच्चारयंस्तां सुषुम्नान्तरब्रह्ममार्गेण चित्राधमन्या ॥
तदीशानलिङ्गान्तरा रन्ध्रगत्या सुयोगेन निष्क्रामयेल्लिङ्गतोऽस्मात् ।
ततो मूलपद्मादपि द्व्यङ्गुलोर्ध्वे स्फुरद्विद्युदाभे पयस्वत्यथाप्ये ॥

वकारादिलान्तार्णवत्षड्दलाढ्ये समाधित्रिकब्रह्मयुक्ते पुनस्ताम् ।
परं लिङ्गमूलस्थिते राकिनीदैवते वारिजन्मन्याधिष्ठानसंज्ञे ॥
समानीय लैङ्गेन रन्ध्रेण लिङ्गं प्रवेशास्य निष्क्रामयेत्साधकेन्द्रः ॥
अथैकादशानामुपर्यङ्गुलीनां सुनीलप्रभे तैजसे तेजसाढ्ये ।
डकारादिफान्ताक्षरस्तोयराजद्दलोत्फुल्लपत्रान्विते नाभिमूले ॥
सलक्ष्मीकनारायणाधिष्ठिते लाकिनीदैवते पूरकाख्ये सरोजे ।
समानीय तत्रत्यलिङ्गेन तद्वत्समायुज्य तस्मात्पुनश्चालयेत्ताम् ॥
ततोऽस्माद्दलानामुपर्यङ्गुलीनां हृदिस्थे सरायौ च वायव्यरूपे ।
ककारादिठान्ताक्षरास्तोमराजद्दलद्योतमाने सरोजे ॥
जवाकान्तिके पार्वती शङ्कराढ्ये तथा कालरात्र्यादिशक्तिप्रयुक्ते ।
लसत्काकिनीकेऽपि नादादियुक्तस्फुरत्सूर्यबिम्बान्वितेऽनाहताख्ये ॥
समानीयतां तत्र तत्रत्यलिङ्गे समायुज्य निष्क्रामयेद् योगिराजः ।
अथैकादशानामुपर्यङ्गुलीनां नभोनिर्मिते कण्ठदेशस्थिते ताम् ॥
नभस्वत्यकारादिभिः षोडशार्णैः स्फुरद्भिर्दलैः षोडशाङ्कैः समेते ।
लसत्साकिनीदेवताके च विद्येश्वराढ्यो लसच्चन्द्रबिम्बे सुधूम्रे ॥
विशुद्धाख्यपद्मे समानीय तद्वच्छिवे योजयित्वा नयेदूर्ध्वमेनाम् ।
विशुद्धाख्यपद्माच्चतुष्काङ्गुलोर्ध्वे भ्रुवोर्मध्यगे शुक्लवर्णाभिरामे ॥
तथा हक्षराजद्दलद्वन्द्वयुक्तेऽन्तरा हाकिनीदैवते सन्मनस्के ।
क्षमा हंसवत्युल्लसत्पार्श्वयुग्मे समायोजयेत्तामथाज्ञासरोजे ॥
ततस्तत्र लिङ्गे वशी योजयित्वा ततो निर्गमय्य प्रकाशस्वरूपम् ।
शिरस्थे स्थिते सर्ववर्णानुभाजा दलानां सहस्रेण विद्योतमाने ॥
जवास्फुरत्केशरेऽधोमुखेऽब्जे समानीयतां कुण्डलीदीप्यमानाम् ।
तदीयस्फुरत् कर्णिकान्तर्निविष्टक्षपानाथसन्मण्डलादन्तराले ॥
स्थितस्य त्रिकोणस्य मध्ये तु बिन्दुस्वरूपे महामायया भासमाने ।
परस्मिन् शिवलिङ्गरन्ध्रेण देवीं समायोजयेद् योगतः साधकेन्द्रः ॥
अयं साधु षट्चक्रभेदप्रकारो मया वर्णितः शास्त्रयोगीन्द्रयोगात् ।
अनेन प्रकारेण शम्भौ पराख्ये पराद्योजयित्वोत्क्रमेणापि भूयः ॥
विभिद्याजषट्कं यथा तेन मूलाम्बुजे स्थापयेदन्तरानन्दसान्द्राम् ।
परस्मिन् शिवे कुण्डलिन्या सुसङ्गात् समुद्भावितैः शास्त्रपीयूषवर्यैः ॥
कृतान्तर्निषेकः प्रजातप्रमोदः कृती पूतदेहो भवेद्देवतुल्यः ।
त्रिथैवं यदि स्यान्महाकुण्डलिन्यागतामात्रधारापथाम्भःशिवानाम् ।
तदा योनिमुद्रा निरुक्तेयमेषा जपादौ सदा मन्त्रिभिः कल्पनीया ॥

ऊर्ध्वाम्नाये—

योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिञ्च काङ्क्षति।
स्वप्नलब्धधनेनैव धनवान् स भवेद्यदि॥
शुक्तौ रजतविभ्रान्तिर्जायते पार्वति यथा।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिञ्च कांक्षति॥

यामले—

आगमे सर्वविद्याश्च आगमे सर्वसम्पदः।
आगमे सर्वयज्ञाश्च सर्वशास्त्राणि चागमे।
आगमे देवि वेदा हि आगमाच्च परा गतिः॥

ताराप्रदीपे—

आगमोक्तविधानेन कलौ देवान् यजेत्सुधीः।
न हि देवा प्रसीदन्ति कलौ चान्यविधानतः॥
सत्ये श्रुत्यर्थमार्गः स्यात्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥

यामले—

येऽभ्यस्यन्ति त्विदं शास्त्रं पठन्ति पाठयन्ति वा।
सिद्धयोऽष्टौ करे तेषां धनधान्यादि सूनवः॥
आदृता शिवलोकेषु भोगिनः क्षोभकारकः।
आप्नुवन्ति परं ब्रह्म सर्वशास्त्रविशारदाः॥

तथा—

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखम्।
मलत्रयव्यपायत्वादागमस्तेन कथ्यते॥



## अथ रामस्तवः

श्रीहनमानुवाच

तिरश्चामपि राजेति समवायं समीयुषाम्।
यथा सुग्रीवमुख्यानां यस्तमुग्रं नमाम्यहम्॥१॥
सकृदेव प्रपन्नाय विशिष्टाभैरयच्छ्रियम्।
विभीषणायाद्धि तटे यस्तं वीरं नमाम्यहम्॥२॥

यो महान् पूजितो व्यापी महाब्धेः करुणामृतम्।
स्तुतो जटायुना यस्तं महाविष्णुं नमाम्यहम्॥३॥
तेजसाप्यायिता यस्य ज्वलन्ति ज्वलनादयः।
प्रकाशते स्वतन्त्रो यस्तं ज्वलन्तं नमाम्यहम्॥४॥
सर्वतोमुखता येन लीलया दर्शिता रणे।
राक्षसेश्वरयोधानां तं वन्दे सर्वतोमुखम्॥५॥
नृभावन्तु प्रपन्नानां हिनस्ति च यथा नृषु।
सिंहः सत्वेष्विवोत्कृष्टस्तं नृसिंहं नमाम्यहम्॥६॥
यस्माद्विभाति वातार्कज्वलनेन्द्राः समुत्थवः।
भियं धिनोतु पापानां भीषणं तं नमाम्यहम्॥७॥
परस्य योग्यतापेक्ष्यरहितो नित्यमङ्गलम्।
ददात्येवं निजौदार्याद्यस्तं भद्रं नमाम्यहम्॥८॥
यो मृत्युं निजदासानां मारयत्यखिलेष्टदः।
तत्रोदाहृतयोर्बन्धो मृत्युमृत्युं नमाम्यहम्॥९॥
यत्पादपद्मप्रणतो भवेदुत्तमपूरुषः।
तदीशं सर्वदेवानां नमनीयं नमाम्यहम्॥
आत्मभावं समुत्क्षिप्य दास्येनैव रघूद्वहम्।
भजेऽहं प्रत्यहं राम ससीतं सह लक्ष्मणम्॥१०॥
नित्यं श्रीरामभक्तस्य किङ्करा यमकिङ्कराः।
शिवमय्यो दिशस्तस्य सिद्धयस्तस्य दासिका;॥११॥
इमं हनुमता प्रोक्तं मन्त्रराजात्मकं स्तवम्।
पठेदनुदिनं यस्तु स रामे भक्तिमान् भवेत्॥१२॥

इति हनुमत्कल्पे मन्त्रराजात्मकं श्रीरामस्तोत्रं समाप्तम्



## अथापरस्तवः

पटजलधरधीरध्वानमादाय चापं
पवनजवनमेकं बाणमाकृष्य तूणात्।
अभयवचनदायी सानुजः सर्वतो मे
रणहतदनुजेन्द्रो रामचन्द्रः सहायः॥१॥
दशरथकुलदर्पो राम बाहुप्रतापो
दशवदनसकोपः क्षालिताशेषपापः।

सुररिपुकृततापो वन्दितानेकभूपो
विरतविमलचन्द्रो रामचन्द्रः सहायः॥२॥
नीलकुमुदगवाक्षैरङ्गदाद्यैः सनीलैः
विरचितकपिवेशैर्देववृन्दैः सनाथैः।
सततमनुगतो मे कुम्भकर्णेभसिंहो
भज दनुजफणीन्द्रो रामचन्द्रः सहायः ॥३॥
पवनतनुजहस्तन्यस्तपादाम्बुजन्मा
कलसभवरजोभिः प्राप्तमाहेन्द्रधन्वा ।
अपरिमितशरौघैः पूर्णतूणीरधारी
लघुनिहतकपीन्द्रो रामचन्द्रः सहायः ॥४॥
कुशिकतनययागं रक्षितुं लक्ष्मणाढ्यः
पवनशरनिकाय क्षिप्तमारीचकाय ।
विदलितहरचापो मेदिनीनन्दनाया
नयनकुमुदचन्द्रो रामचन्द्रः सहायः ॥५॥
असुरकुलकृशानुर्मानसाम्भोजभानुः
सुरनरनिकराणामग्रणीर्भेवधूणां ।
अगणितगुणसीमा नीलमेघौघधामा
लसदमितमुनीन्द्रो रामचन्द्रः सहायः ॥६॥
कुवलयदलनीलः कामितार्थप्रदो मे
मुनिजनकृतरक्षो रक्षसात्महस्ता ।
परिहृतदुरितौघो नाममात्रेण पुंसा-
मखिलसुरनृपेन्द्रो रामचन्द्रः सहायः ॥७॥
कनककमलकान्त्या कान्तयासङ्गतोऽसौ
मुनिमनुजशरण्यः कामदः सत्यसन्धः।
सुजननिरहबन्धुर्लीलया बद्धसिन्धुः
स्तवदखिलकवीन्द्रो रामचन्द्रः सहायः ॥८॥
अनुदिनमनुरामं रामचन्द्राष्टकं यः
पठति लिखति तं नो वीक्षते भूतसंघः ।
अतिबहुलसमृद्धिङ्घानुभूयात्र भूमा-
वनुपममभिरामं राममन्तो जिहीते ॥९॥

इति रामाष्टकस्तोत्रं समाप्तम्

●

# अथ रामाष्टकशतकम्

वेदव्यास उवाच

श्रृणु गाङ्गेय वक्ष्यामि रामस्याद्भुतकर्मणः।
नामाष्टशतकं पुण्यं त्रिषु लोकेषु विश्रुतम् ॥१॥
नातः परतरं गुह्यं त्रिषु लोकषु विद्यते।
कैलासशिखरे रम्ये नानारत्नविभूषिते ॥२॥
एकाग्रः प्रयतो भूत्वा विष्णुमाराध्य भक्तितः।
उपविष्टस्ततो भोक्तुं पार्वतीं शङ्करोऽब्रवीत् ॥३॥
पार्वत्येहि मया सार्द्धं भोक्तुं भुवनवन्दिते।
तमाह पार्वती देवी जप्त्वा नामसहस्रकम् ॥४॥
ततो भोक्ष्याम्यहं देव भुज्यतां भवता प्रभो।
ततस्तां पार्वतीं प्राह प्रहसन् परमेश्वरः ॥५॥
धन्यासि कृतपुण्यासि विष्णुभक्तासि पार्वति।
दुर्लभा वैष्णवी भक्तिर्भागधेयं विनेश्वरि ॥६॥
रकारादीनि नामानि श्रृण्वतो मम पार्वति।
मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥७॥
रमन्ते योगिनोऽनन्तो सत्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥८॥
रामरामेति रामेति रामरामे मनोरमे।
सहस्रनामभिस्तुल्यं रामनाम वरानने ॥९॥
रामेत्युक्ता महादेवि भुंक्ष्व सार्द्धं मयाधुना।
ततो रामेति नामोक्त्वा सह भुक्त्वा च पार्वती ॥१०॥
ततो भुक्त्वा महादेवी पतिना सह संस्थिता।
पप्रच्छ श्रीमहादेवं प्रीतिप्रवणमानसा ॥११॥
सहस्रनामभिस्तुल्यं रामनाम त्वयोदितम्।
तस्यान्यान्यपि नामानि सन्ति चेद्रावणद्विषः।
कथ्यतां मम देवेश तत्र मे प्रीतिरुत्तमा ॥१२॥

श्रीशङ्कर उवाच

श्रृणु नामानि वक्ष्यामि रामचन्द्रस्य पार्वति।
लौकिका वैदिकाः शब्दा ये केचित्सन्ति पार्वति ॥१३॥

नामानि रामभद्रस्य सहस्रं तेषु चाधिकम्।
तेषु चात्यन्तमुख्यं हि नाम्नामष्टोत्तरं शतम्॥१४॥
विष्णोरेकैकनामानि सर्ववेदाधिकं मतम्।
तादृङ्नामसहस्रेण रामनाम परं मतम्॥१५॥
जपता सर्ववेदाश्च सर्वमन्त्राश्च पार्वति।
तस्मात् कोटिगुणं पुण्यं रामनाम्नैव लभ्यते॥१६॥
अथ श्रीरामाष्टोत्तरशतनामस्तोत्रस्य ईश्वर ऋषिरनुष्टुप्छन्दः।
श्रीरामचन्द्रो देवता श्रीरामप्रीत्यर्थं जपे विनियोगः॥१७॥
ॐ श्रीरामो रामभद्रस्य रामचन्द्रस्य शाश्वतः।
राजीवलोचनः श्रीमान् राजेन्द्रः रघुपुङ्गवः॥१८॥
विश्वामित्रप्रियो दान्तः शरण्यः त्राणतत्परः।
बालिप्रमथनो वाग्मी सत्यवाक् सत्यविक्रमः॥१९॥
सत्यव्रतो व्रतफलः सदा हनुमदाश्रयः।
कोशलेशः खरध्वंसी विराधवधपण्डितः॥२०॥
विभीषणपरित्राता दशग्रीवशिरोहरः।
सप्तपातालभेत्ता च हरकोदण्डखण्डनः॥२१॥
जामदग्न्यमहादर्पदमनस्ताड़कान्तकः।
वेदान्तसारोऽमेयात्मा भववैद्यश्च भेषजः॥२२॥
दूषणस्त्रिशिरोहन्ता त्रिमूर्त्तिस्त्रिगुणस्त्रयी।
त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्र्यकीर्त्तनः॥२३॥
त्रिलोकी रक्षको धन्वी दण्डकारण्यपुण्यकृत्।
अहल्यापावनश्चैव पितृभक्तो वरप्रदः॥२४॥
जितेन्द्रियो जितक्रोधो जितलोभोः जगद्गुरुः।
ऋक्षवानरसंघाती चित्रकूटसमाश्रयः॥२५॥
जयन्तप्राणवरदः सुमित्रापुत्रसेवितः।
सर्वदेवाधिदेवश्च मृतबालकजीवनः॥२६॥
मायामारीचहन्ता च महाभागो महाभुजः।
सर्वदेवस्तुतः सौम्यो ब्रह्मण्यो मुनिसंस्तुतः॥२७॥
महायोगी महोदारः सुग्रीवेप्सितराज्यदः।
सर्वपुण्याधिकफलस्तीर्थः सर्वाघनाशनः॥२८॥
आदिपुरुषो महापुरुषः परमः पुरुषस्तथा।
पुण्योदयो दयासारः पुराणपुरुषोत्तमः॥२९॥

स्मितवक्त्रो मितभाषी पूर्णभाषी च राघवः ।
अनन्तगुणगम्भीरो वीरोदात्तगुणोत्तमः ॥३०॥
मायामानुषचारित्रो महादेवाभिपूजितः ।
सेतुकृज्जितवारीशः सर्वतीर्थमयो हरिः ॥३१॥
श्यामाङ्गसुन्दरः शूरः पीतवासा धनुर्द्धरः ।
सर्वयज्ञाधिपो यज्ञो जरामरणवर्जितः ॥३२॥
शिवलिङ्गप्रतिष्ठाता सर्वाघगणवर्जितः।
परमात्मा परं ब्रह्म सच्चिदानन्दविग्रहः ॥३३॥
परंज्योतिः परंधाम पराकाष्ठा परात्परः ।
परेशः पारगः पारः सर्ववेदात्मकः शिवः ॥३४॥
इत्येतद्रामभद्रस्य नाम्नामष्टोत्तरं शतम् ।
गुह्याद्गुह्यतरं देवि! तव प्रीत्या प्रकीर्त्तितम् ॥३५॥
यः पठेत् शृणुयाद्वापि भक्तियुक्तेन चेतसा ।
स सर्वैर्मुच्यते पापैः कल्पकोटिशतोद्भवैः ॥३६॥
जलानि स्थलतां यान्ति शत्रवो यान्ति मित्रताम् ।
राजानो दासतां यान्ति वह्नयो यान्ति शैत्यताम् ॥३७॥
आनुकूल्यञ्च भूतानि स्थैर्यं यान्ति चलाः श्रियः ।
अनुग्रहं ग्रहा यान्ति शान्तिमायान्त्युपद्रवाः ।
पठतो भक्तिभावेन जनस्य गिरिसम्भवे ॥३८॥
यः पठेत्परया भक्त्या तस्य वश्यं जगत्त्रयम् ।
यद्यत्कामयते चित्ते तत्तदाप्नोति कीर्त्तनात् ॥३९॥
यः पठेद्रामचन्द्रस्य नाम्नामष्टोत्तरं शतम् ।
ज्ञानेनापि च कुर्वाणो न स पापेन लिप्यते ॥४०॥
सर्ववेदेषु तीर्थेषु दानेषु च व्रतेषु च ।
तत्फलं कोटिगुणितं स्तवेनानेन लभ्यते ॥४१॥
पुण्यकालेषु सर्वेषु पठन्नानन्त्यमश्नुते ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥४२॥
वैकुण्ठे वासमाप्नोति दशपूर्वैर्दशापरैः ।
रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ।
स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो नराः ॥४३॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥४४॥

इमं मन्त्रं महेशानि! जपन्नेव दिवानिशम्।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥४५॥
इत्येतद्रामभद्रस्य माहात्म्यं वेदसम्मतम्।
कथितं तव गाङ्गेय यतस्त्वं वैष्णवोत्तमः ॥४६॥
वन्दामहे महेशानं हरकोदण्डखण्डनम्।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥४७॥



इसके अनन्तर लेखक महोदय ने रामकवच को स्थान दिया है, जो पद्मपुराणोक्त वज्रपञ्जराख्य श्रीरामकवच है। यह अति प्रचलित तथा गीताप्रेस आदि से प्रकाशित है। अतः उसे यहाँ नहीं लिखा जा रहा है। उसके स्थान पर रामरक्षावेदसागर स्तोत्र संयोजित कर रहा हूँ, जो महर्षि भृगु-प्रणीत है तथा सर्वथा अप्रकाशित एवं अनन्त फलदायक है। यह भगवान् श्रीराम की जन्मकुण्डली तथा तदनुसार फलादेश होने के कारण सर्वजनवन्द्य भी है, जिसे भगवान् के मर्त्यलोक में आविर्भाव के सहस्रों वर्ष पूर्व महर्षि भृगु ने लिखा था।

## श्रीरामरक्षावेदसागरः

पूर्णत्रिंशतिक्षेपा च कर्कटे चन्द्रवाक्पतिः।
कन्याया सिंहिकापुत्र तुलास्थो रविनन्दनः ॥१॥
पाताले मेदिनीपुत्रः वृषस्थश्चन्द्रमाः सुतः।
आकाशे मेषभे सूर्यः झषस्थौ केतुभार्गवौ ॥२॥
सर्वग्रहानुमानेन योगोऽयं वेदसागरः।
वेदसागरके ज्ञातो पूर्वजन्मनि भार्गव ॥३॥
पूर्णब्रह्म स्वयंकर्त्ता स्वप्रकाशो निरञ्जनः।
निर्गुणो निर्विकल्पश्च निरीहः सच्चिदात्मकः ॥४॥
गिरा ज्ञानञ्च गोऽतीतः इच्छाकारी स्वरूपधृक्।
विना घ्राणं सदा घ्राणी विना नेत्रं च वीक्षकः ॥५॥
अकर्णेन श्रुतं सर्वं गिराहीनं च भाषितम्।
करहीनं कृतं सर्वकर्माणि च शुभाशुभम् ॥६॥
पदहीना गतिः सर्वा कुशला सफलक्रिया।
स्वरूपो रूपहीनश्च समर्थः सर्वकर्मषु ॥७॥
त्रिविधस्त्रिगुणः कालः त्रिलोकी स चराचरः।
महेन्द्रो देवताः सर्वा नागकिन्नरपन्नगाः ॥८॥

सिद्धविद्याधरा यक्षाः गन्धर्वाः सकलाः कवे।
राक्षसा दानवाः सर्वे मानवा वानराण्डजाः ॥९॥
सागराश्च खगा वृक्षाः पशुकीटादयस्तथा।
शैला नद्यः कला सर्वा मोहमायादिकाः क्रियाः ॥१०॥
इच्छामायास्त्रिवेदाश्च निर्मिता विविधा क्रियाः।
शरण्यः सर्वदा शान्तः अलक्ष्यो लक्षकः सदा ॥११॥
जरामरणहीनश्च महाकालस्य चान्तकः।
सर्वसर्वविहीनोऽपि सचराचरदर्शकः ॥१२॥
पूर्वापरक्रियाज्ञानी शृणु शुक्र न चान्यथा।
प्रेरिता सर्वदेवैश्च कालान्तरगते कवे ॥१३॥
धरित्री ब्रह्मणो लोके जगाम दुःखपीडिता।
शिवो ब्रह्मा सुराः सर्वे प्रार्थनाञ्च कृता मुहुः ॥१४॥
सदुःखवचनं श्रुत्वा दैववाणी भवेत्कवे।
धैर्यवन्तः सुराः सर्वे प्रार्थना सफला भवेत् ॥१५॥
श्रुत्वा हृष्ट्वा सुरा सर्वे जगाम क्षितिमण्डले।
नरवानररूपञ्च धृत्वा ब्रह्मेच्छया कवे ॥१६॥
यत्र तत्र सुराः सर्वे हरिदर्शनमानसाः।
अधर्मनिरतान् लोकान् दृष्ट्वा कष्टेन पीडितान् ॥१७॥
तत इच्छाप्रभावेण गोब्राह्मणसुरार्थकम्।
मायामानुषरूपेण जगदानन्दहेतवे ॥१८॥
आजगाम धरापृष्ठे कौशलाख्ये महापुरे।
इच्छ्वाकुवंशे भो शुक्र भूत्वा मानुषरूपधृक् ॥१९॥
सरय्वा दक्षिणे भागे महापुण्ये च क्षेत्रके।
मधुमासे च धवले नवम्यां भौमवासरे ॥२०॥
पुनर्वसौ च सौभाग्ये मातृगर्भात् समुद्भवः।
मन्मथानां च कोटीनां सुन्दरं सागरोपमम् ॥२१॥
श्यामाङ्गं मेघवर्णाभं मृगाक्षं कान्तिमत्परम्।
भव्याङ्गं भव्यवर्णञ्च सर्वसौन्दर्यसागरम् ॥२२॥
सर्वाङ्गेषु मनोहरं ह्यतिवरं शान्तमुद्रं प्रशान्तम्।
वन्दे लोकाभिरामं मुनिजनसहितं शैवमन्त्रं शरण्यम् ॥२३॥
कोटिवाक्पतिधीमांश्च कोटिभास्करभास्वरः।
दयाकोटिसमुद्रश्च यशः शीलः पराक्रमी ॥२४॥

सर्वसारः सदा शान्तः वेदसागर भार्गव।
दशवर्षसहस्राणि भूतले स्थितिमानसौ ॥२५॥
चतुर्दशसमाः शुक्र बभ्राम च वने वने।
राक्षसानां वधार्थाय दुष्टानां निग्रहाय च ॥२६॥
प्रादुर्भूतो जगन्नाथो मायामानुषवत् कवे।
अयोध्यानगरे शुक्र बहुवर्षसहस्रकम् ॥२७॥
नानामुनिगणैर्युक्तो विहरन् धर्मवत्सलः।
सर्वैः साकं स्वमायाभिः अन्तर्धानं भवेत्कवे ॥२८॥
इच्छया लीलया युक्तो स्वीये लोके वसेत्सदा।
माया क्रीडा पुनर्भूयात् काले काले युगे युगे ॥२९॥
लोकानां च हितार्थाय कलौ चैव विशेषतः।
पठनाच्छ्रवणात् पुण्यं कल्याणं सततं भवेत् ॥३०॥
निर्भयो नात्र सन्देहः सत्यं सत्यं न संशयः ॥३१॥



## अथ श्रीकृष्णस्तोत्रम्

प्रसीद भगवन् मह्यमज्ञानकुण्ठितात्मने।
तवाङ्घ्रिपङ्कजरजो रागिनीं भक्तिमुत्तमाम् ॥१॥
अज! प्रसीद भगवन्नमितद्युतिपञ्जर।
अप्रमेय! प्रसीदास्मन् दुःखघ्न पुरुषोत्तम ॥२॥
स्वसंवेद्य प्रसीदास्मदानन्दात्मन्ननामय।
अचिन्त्यसार! विश्वात्मन्! प्रसीद परमेश्वर! ॥३॥
प्रसीद तुङ्ग! तुङ्गानां प्रसीद शिवशोभने!।
प्रसीद गुणगम्भीर! गम्भीराणां महाद्युते।
प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम् ॥४॥
गुरोर्गरीयान् सर्वेश! प्रसीदानन्तदेहिनाम्।
जय माधव मायात्मन् जय शाश्वतशङ्खभृत् ॥५॥
जय शङ्खधर श्रीमान् जय नन्दकनन्दन।
जय चक्रगदापाणे! जय देव जनार्दन ॥६॥
जय रत्नवराबद्धकिरीटाक्रान्तमस्तक!।
जय पक्षिपतिच्छायानिरुद्धार्ककरारुण ॥७॥

नमस्ते नरकाराते नमस्ते मधुसूदन! ।
नमस्ते ललितापाङ्ग नमस्ते नरकान्तक! ॥८॥
नमः पापहरेशान! नमः सर्वभयापह ।
नमः सम्भूतसर्वात्मन्नमः सम्भूतकौस्तुभः ॥९॥
नमस्ते नयनातीत! नमस्ते भयहारक! ।
नमो विभिन्नदेहाय नमः श्रुतिपथातिग ॥१०॥
नमस्त्रिमूर्त्तिभेदेन सर्गस्थित्यन्तहेतवे ।
विष्णवे त्रिदशाराति जिष्णवे परमात्मने ॥११॥
चक्रभिन्नारिचक्राय चक्रिणे चक्रबन्धवे ।
विश्वाय विश्ववन्द्याय विश्वभूतानुवर्त्तिने ॥१२॥
नमस्ते योगिध्येयाय नमोऽस्त्वध्यात्मरूपिणे ।
भक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ॥१३॥
स्तवनं हवनं चेष्टा ध्यानं पूजा नमस्क्रिया ।
देवेश कर्म सर्वं मे भवेदाराधनं तव ॥१४॥
इति हवनजपार्चा भेदतो विष्णुपूजा-
नियतहृदयकर्मा यस्तु मन्त्री चिराय ।
स खलु सकलकामान् प्राप्य कृष्णान्तरात्मा
जननमृतिविमुक्तामुत्तमां मुक्तिमेति ॥१५॥
गोगोपगोपिकवीतं गोपालं गोषु गोप्रदम् ।
गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकम् ॥१६॥
प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम् ।
धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥१७॥

इति श्रीकृष्णस्तव समाप्तः



## अथ गोपालस्तवः

नारद उवाच

नवीननीरदश्यामं नीलेन्दीवरलोचनम् ।
वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥१॥
स्फुरद्वर्हदलोद्बद्धनीलकुञ्चितमूर्द्धजम् ।
कदम्बकुसुमद्बन्द्ववनमालाविभूषितम् ॥२॥

गण्डमण्डलसंसर्गि चलत्काञ्चनकुण्डलम् ।
स्थूलमुक्ताफलोदारहारद्योतितवक्षसम् ॥३॥
हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ।
मन्दमारुतसंक्षोभवल्गिताम्बरसञ्चयम् ॥४॥
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ।
लक्षद्गोपालिका चेतो मोहयन्तं मुहुर्मुहुः ॥५॥
वल्लवीवदनाम्भोजमधुपानमधुव्रतम् ।
क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥६॥
यौवनाद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ।
विचित्राम्बरभूषाभिर्गोपनारिभिरावृतम् ॥७॥
प्रभिन्नाञ्जनकालिन्दीजलकेलिफलोत्सुकम् ।
बोधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां गणम् ॥८॥
कालिन्दीजलसंसर्गिशीतलानिलकम्पिते ।
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥९॥
रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ।
कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥१०॥
वसन्तकुसुमामोदसुरभिकृतदिङ्मुखे ।
गोवर्द्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥११॥
सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ।
खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम् ॥१२॥
वेणुवाद्यमहोल्लासकृतहुङ्कारनिःस्वनैः ।
सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥१३॥
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्त्तिभिः ।
दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥१४॥
नारदाद्यैर्मुनिश्रेष्ठैर्वदावेदाङ्गपारगैः ।
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥१५॥
य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ।
त्रिसध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥१६॥
राजवल्लभतामेति भवेत् सर्वजनप्रियः ।
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥१७॥

इति गौतमीये श्रीगोपालस्तोत्रं समाप्तम्

●

# अथ श्रीकृष्णकवचम्

पुलस्त्य उवाच

भगवन् सर्वधर्मज्ञ कवचं यत्प्रकाशितम्।
त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो ॥१॥

सनत्कुमार उवाच

शृणु वक्ष्यामि विप्रेन्द्र कवचं परमाद्भुतम्।
नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥२॥
ब्रह्मणा कथितं मह्यं तव स्नेहाद्ददामि ते।
अतिगुह्यतरं तत्त्वं ब्रह्ममन्त्रौघविग्रहम् ॥३॥
यद्धृत्वा पठनाद् ब्रह्मा सृष्टिं वितनुते ध्रुवम्।
यद्धृत्वा पठनात् पाति महालक्ष्मीर्जगत्त्रयम्।
पठनाद्धारणात् शम्भुः संहर्त्ता सर्वतत्त्ववित् ॥४॥
त्रैलोक्यजननी दुर्गा महिषादिमहासुरान्।
वरदृप्तान् जघानैव पठनाद्धारणाद्यतः ॥५॥
एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः।
इदं कवचमत्यन्तं गुप्तं कुत्रापि नो वदेत् ॥६॥
शठाय परशिष्याय दत्त्वा च मृत्युमाप्नुयात्।
त्रैलोक्यमङ्गलस्यास्य कवचस्य प्रजापतिः ॥७॥
ऋषिश्छन्दश्च गायत्री देवो नारायणः स्वयम्।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥८॥
प्रणवो मे शिरः पातु नमो नारायणाय च।
भालं पायान्नेत्रयुग्ममष्टार्णो भुक्तिमुक्तिदः ॥९॥
क्लीं कृष्णाय सदा घ्राणं गोविन्दायेति जिह्विकाम्।
गोपीजनपदं वल्लभाय स्वाहा भुजद्वयम् ॥१०॥
अष्टाक्षरो महामन्त्रः कण्ठं पातु दशाक्षरः।
क्लीं कृष्णं क्लीं करौ पायात्क्लीं कृष्णायाङ्गजोऽवतु ॥११॥
हृदयं भुवनेशानी क्लीं कृष्णाय क्लीं स्तनौ मम।
गोपालयाग्निजाया च कुक्षियुग्मं सदावतु ॥१२॥
क्लीं कृष्णाय सदा पातु पार्श्वयुग्ममनूत्तमः।
कृष्णगोविन्दकौ पातु स्मराद्यौ ङेयुतौ मनुः ॥१३॥

अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु।
पृष्ठं क्लीं कृष्णकङ्कालं क्लीं कृष्णाय द्विठान्तकः ॥१४॥
सक्थिनी पातु सततं श्रीं ह्रीं क्लीं कृष्ण ठद्वयम्।
ऊरू सप्ताक्षरः पातु त्रयोदशाक्षरोऽवतु ॥१५॥
श्रीं ह्रीं क्लीं पदतो गोपीजनवल्लपदं ततः।
भाय स्वाहेति पायुं वै क्लीं ह्रीं श्रीं सदशार्णकः ॥१६॥
सर्वाङ्गं मे सदा पातु द्वारकानायको बली।
नमो भगवते पश्चाद् वासुदेवाय तत्परम् ॥१७॥
ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्वदावतु।
श्रीं ह्रीं क्लीं च दशार्णस्तु क्लीं ह्रीं श्रीं षोडशाक्षरः ॥१८॥
गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु।
ह्रीं श्रीं दशाक्षरो मन्त्रो दक्षिणे मां सदावतु ॥१९॥
तारो नमो भगवते रुक्मिणीवल्लभाय च।
स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ॥२०॥
क्लीं हृषीकेपदं शाय नमो मां वारुणेऽवतु।
अष्टादशार्णः कामान्तो वायव्यां मां सदावतु ॥२१॥
श्रीं माया कामकृष्णाय गोविन्दाय द्विठो मनुः।
द्वादशार्णात्मको विष्णुरुत्तरे मां सदावतु ॥२२॥
वाग्भवं कामकृष्णाय ह्रीं गोविन्दाय ततः परम्।
श्रीं गोपीजनवल्लान्ते भाय स्वाहा च सौस्तुतः ॥२३॥
द्वाविंशत्यक्षरो मन्त्रो मामैशान्ये सदावतु।
कालीयस्य फणामध्ये दिव्यं नृत्यं करोति तम् ॥२४॥
नमामि देवकीपुत्रं नृत्यराजानमच्युतम्।
द्वात्रिंशदक्षरो मन्त्रोऽप्यधो मां सर्वदावतु ॥२५॥
कामदेवाय विद्महे पुष्पबाणाय धीमहि।
तन्नोऽनङ्गः प्रचोदयान्मां सदा पातु चोर्ध्वतः ॥२६॥
इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम्।
त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपकम् ॥२७॥
ब्रह्मणा कथितं पूर्वं नारायणमुखाच्छ्रुतम्।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥२८॥
गुरुं प्रणम्य विधिवत् कवचं प्रपठेत्ततः।
सकृद्द्विस्त्रिर्यथाज्ञानं सोऽपि सर्वतपोमयः ॥२९॥

मन्त्रेषु सकलेष्वेव देशिको नात्र संशयः ।
शतमष्टोत्तरञ्चास्य पुरश्चर्याविधिः स्मृतः ॥३०॥
स्पर्द्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ।
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् ॥३१॥
संवत्सरसहस्राणां पूजायाः फलमाप्नुयात् ।
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद्यदि ॥३२॥
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥३३॥
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।
कलां नार्हन्ति तान्येव सकृदुच्चारणात्ततः ॥३४॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ॥३५॥
इदं कवचमज्ञात्वा भजेद्यः पुरुषोत्तमम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रस्तस्य सिध्यति ॥३६॥

इति सनत्कुमारतन्त्रे त्रैलोक्यमङ्गलं नाम श्रीकृष्णकवचं समाप्तम्



## अथ नृसिंहकवचम्

नारद उवाच

इन्द्रादिदेववृन्देश! तातेश्वर! जगत्पते ।
महाविष्णुनृसिंहस्य कवचं ब्रूहि मे प्रभो ॥१॥
यस्य प्रपठनाद्विद्वान् त्रैलोक्यविजयी भवेत् ।
स्रष्टाहं जगतां वत्स! पठनाद्धारणाद्यतः ॥२॥
लक्ष्मीर्जगत्त्रयं पाति संहर्त्ता च महेश्वरः ।
पठनाद्धारणाद्देवा बभूवुश्च दिगीश्वराः ॥३॥
ब्रह्ममन्त्रमयं वक्ष्ये भूतादिविनिवारकम् ।
यस्य प्रसादाद् दुर्वासास्त्रैलोक्यविजयी मुनिः ॥४॥
पठनाद्धारणाद्यस्य शास्ता च क्रोधभैरवः ।
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः ॥५॥
ऋषिश्छन्दश्च गायत्री नृसिंहो देवता विभुः ।
सर्वाभिलाषसिद्ध्यर्थं विनियोगः प्रकीर्त्तित ॥६॥

क्षौं मे शिरः सदा पातु चन्द्रवर्णा महामनुः।
उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ॥७॥
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्।
द्वात्रिंशदक्षरो मन्त्रो मन्त्रराजः सुरद्रुमः ॥८॥
कण्ठं पातु ध्रुवं क्षौं हृद्भगवते चक्षुषी मम।
नरसिंहाय च ज्वालामालिने पातु कर्णकम् ॥९॥
दीप्तदंष्ट्राय च तथाग्निनेत्राय च नासिकाम्।
सर्वरक्षोघ्नाय सर्वभूतविनाशनाय च ॥१०॥
सर्वज्वरविनाशय दहदह पचद्वयम्।
रक्ष रक्षद्वयं पश्चात्स्वाहा पातु मुखं मम ॥११॥
तारादिरामचन्द्राय नमः पायात् गुदं मम।
क्लीं पायात् पार्श्वयुग्मं मे तारो नमः पदन्ततः ॥१२॥
नारायणाय पायुञ्च आं ह्रीं क्षौं क्रौं च हुञ्च फट्।
षडक्षरः कटिं पातु ॐ नमो भगवते पदम् ॥१३॥
वासुदेवाय पृष्ठं क्लीं कृष्णाय क्लीमुरुद्वयम्।
क्लीं कृष्णाय सदा पातु जानुनी च मनूत्तमः ॥१४॥
क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमः पायात्पदद्वयम्।
क्षौं नरसिंहाय क्षौञ्च सर्वाङ्गं मे सदावतु ॥१५॥
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्।
तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित् ॥१६॥
गुरुपूजां विधायाथ गृह्णीयात् कवचं ततः।
सर्वपुण्ययुतो भूत्वा सर्वसिद्धियुतो भवेत् ॥१७॥
शतमष्टोत्तरञ्चास्य पुरश्चर्याविधिः स्मृतः।
हवनादीन् दशांशेन कृत्वा तत्साधयेद् ध्रुवम् ॥१८॥
ततस्तु सिद्धकवचः पूर्णात्मा मदनोपमः।
स्पर्द्धामुद्धूय भवने लक्ष्मीर्वाणी वसेत्ततः ॥१९॥
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत्।
अपि वर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥२०॥
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद्यदि।
कण्ठे वा दक्षिणे बाहौ नरसिंहो भवेत्स्वयम् ॥२१॥
योषिद् वामभुजे चैव पुरुषो दक्षिणे भुजे।
विभृयात् कवचं पुण्यं सर्वसिद्धियुतो भवेत् ॥२२॥

काकवन्ध्या च या नारी मृतवत्सा च या भवेत्।
जन्मवन्ध्या नष्टपुष्पा बहुपुत्रवती भवेत्॥२३॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः।
त्रैलोक्यं क्षोभयन्त्येव त्रैलोक्यविजयी भवेत्॥२४॥
भूतप्रेतपिशाचाश्च राक्षसा दानवाश्च ये।
तं दृष्ट्वा प्रपलायन्ते देशाद्देशान्तरं ध्रुवम्॥२५॥
यस्मिन् गेहे च कवचं ग्रामे वा यदि तिष्ठति।
तं देशन्तु परित्यज्य प्रयान्ति चातिदूरतः॥२६॥

इति ब्रह्मसंहितायां त्रैलोक्यविजयं नाम नृसिंहकवचं समाप्तम्



## अथ विष्णुनामाष्टकस्तोत्रम्

ब्रह्मोवाच

अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्।
हंसं नारायणञ्चैव एतन्नामाष्टकं शुभम्॥१॥
त्रिसन्ध्यं यः पठेन्नित्यं तस्य पापं न विद्यते।
शत्रुसैन्यं क्षयं याति दुःस्वनं सुस्वनं भवेत्॥२॥
गङ्गायां मरणञ्चैव दृढा भक्तिश्च केशवे।
ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः॥३॥

इति ब्रह्मपुराणे श्रीविष्णुनामाष्टकस्तोत्रं समाप्तम्



## अथ नारायणोपनिषत्

ॐ अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजयेति। नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद् ब्रह्मा जायते। नारायणाद् रुद्रो जायते। नारायणदिन्द्रो जायते। नारायणात् प्रजापतिः प्रजायते। नारायणाद् द्वादशादित्या रुद्राः वसवः। सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते। नारायणात् प्रवर्त्तन्ते। नारायणे प्रलीयन्ते। एतद् ऋग्वेदशिरोऽधीते। अथ नित्या नारायणः ब्रह्मा च नारायणः, शिवश्च नारायणः, शक्रश्च नारायणः, कालश्च नारायणः, दिशश्च नारायणः, विदिशश्च नारायणः, ऊर्ध्वञ्च नारायणः, अधश्च नारायणः, अन्तर्बहिश्च नारायणः,

नारायण एवेदं सर्वं यद्भूतं यच्च भाव्यम्। निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद स विष्णुरेव भवति। स विष्णुरेव भवति। य एतद्यजुर्वेदशिरोऽधीते। ॐ इत्यग्रे व्याहरेत् नम इति पश्चान्नारायणायेत्युपरिष्टात्। ॐमित्येकाक्षरं नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं पदम्। यो ह वै नारायणस्याष्टाक्षरं पदमध्येति, सोऽनुपप्लवः सर्वमायुरेति। विन्देत प्राजापत्यं गौपत्यम् ततोऽमृतत्वमश्नुते।।

इति नारायणोपनिषत् समाप्ता



## अथर्वाङ्गिरसम्

प्रत्यगानन्दं ब्रह्मस्वरूपं प्रणवस्वरूपं अकार उकार मकार इति। ता अनेकधा समभवत् तदेव उमिति। यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्। ॐ नमो नारायणायेति। ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठभुवनं गमिष्यति। तदिदं पुण्डरीकं विज्ञानघन तस्मात्तड़िदाभमात्रम्। ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः। ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युत इति सर्वभूतस्थमेकं वै ॐ नारायणं कारणरूपमकारणं परं ब्रह्म। एतदथर्वशिरो योऽधीते, प्रातरधीयानो रात्रिकृतं पापं नाशयति, सायमधीयानो दिवसकृतं पापं नाशयति। तत् सायं प्रातरधीयानोऽपापो भवति। मध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते। सर्ववेदपरायणपुण्यं लभते नारायणसायुज्यमवाप्नोति य एवं वेद।

इत्यथर्वाङ्गिरसं समाप्तम्



## अथापामार्जनस्तोत्रम्

ॐ नमः परमार्थायेत्यपामार्जनमन्त्रस्य पुलस्त्य ऋषिरनुष्टुप्छन्दः श्रीनरसिंहो देवता हरामुकस्येति बीजं अच्युतानन्देति शक्तिः तप्तहाटकेशाग्रेति कीलकं अमुकगोत्रस्य श्रीअमुकदेवशर्मणो झटित्युत्पन्नव्याधिप्रशमनार्थं पाठे विनियोगः।

**पुलस्त्य उवाच**

**ॐ नमः परमार्थाय पुरुषाय महात्मने।**
**अरूपबहुरूपाय व्यापिने परमात्मने ॥१॥**

निष्कल्मषाय शुद्धाय ध्यानयोगरताय च।
नमस्कृत्वा प्रवक्ष्यामि यत्तं सिद्ध्यतु मे वचः ॥२॥
त्रिविक्रमाय रामाय वैकुण्ठाय नमो नमः।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिद्ध्यतु मे वचः ॥३॥
वराह नरसिंहेश वामनेश त्रिविक्रम।
हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥४॥
अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः।
अखण्डितानुभावैस्त्वं सर्वदुष्टहरो भव ॥५॥
हरामुकस्य दुरितं दुष्कृतं दुरुपोषितम्।
मृत्युर्बन्धार्तिभयदं दुरितस्य च यत्फलम् ॥६॥
गरस्पर्शमहारोगदुर्योगजरयाजर ।
ॐ नमो भगवते वासुदेवाय नमः कृष्णाय खड्गिने ॥७॥
नमः पुष्करनेत्राय केशरायादिचक्रिणे।
नमः कमलकिञ्जल्कपीतनिर्मलवाससे ॥८॥
महाहररिपुस्कन्धयुष्टचक्राय चक्रिणे।
दंष्ट्रोद्धृतक्षितिभृति त्रयीमूर्त्तिमते नमः ॥९॥
महायज्ञवराहाय शेषभोगाङ्गशायिने।
तप्तहाटककेशाग्रज्वलत्पावकलोचने ॥१०॥
वज्राधिकनखस्पर्शदिव्यसिंह नमोऽस्तु ते।
काश्यपायातिह्रस्वाय ऋग्यजुःसामभाषिणे ॥११॥
तुभ्यं वामनरूपाय सृजते गां नमो नमः।
वराहाशेषदुष्टानि सर्वपापफलानि च ॥१२॥
मर्द्द मर्द्द महादंष्ट्र मर्द मर्द च दुष्कृतम्।
नरसिंहकरालास्यदन्तप्रान्ते ज्वलानल ॥१३॥
भुङ्क्ष्व भुङ्क्ष्व निनादेन दुष्टान्यस्यार्त्तिनाशन।
ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ॥१४॥
प्रशमं सर्वदुष्टानि नयत्वस्य जनार्दनः।
ऐकाहिकं द्व्याहिकञ्च तथा त्रिदिवसज्वरम् ॥१५॥
चातुर्थकं तथात्युग्रं तथैव सततज्वरम्।
दोषोत्थं सन्निपातोत्थं तथैवागन्तुकज्वरम् ॥१६॥
शमं नयाशु गोविन्द छिन्धि छिन्ध्यस्य वेदनाम्।
नेत्रदुःखं शिरोदुःखं दुःखञ्चोदरसम्भवम् ॥१७॥

अन्तःश्वासं बहिःश्वासं परितापं सवेपथुम्।
गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षवम्॥१८॥
कामलं पाण्डुरोगांश्च प्रमेहांश्चातिदारुणान्।
भगन्दरातिसारांश्च मुखरोगान् सविद्रधीन्॥१९॥
अश्मरीमूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान्।
ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः॥२०॥
यानि च क्रूरभूतानि विषरोगाश्च दारुणाः।
तानि सर्वाणि सर्वात्मा परमात्मा जनार्दनः॥२१॥
अपामार्जनकं शस्तं विष्णोर्नामाभिमन्त्रितम्।
एते कुशा विष्णुशरीरसम्भवा जनार्दनोऽहम्॥२२॥
शान्तिरस्तु शिवञ्चास्तु दुष्टमस्य प्रशाम्यतु।
यदस्य दुरितं किञ्चित् क्षिप्तं नारायणार्णवे॥२३॥
स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात्।
यत एवागतं पापं तत्रैव प्रतिगच्छतु॥२४॥
एतद्रोगाभिभूतानां जन्तूनां हितमिच्छता।
विष्णुभाजनकर्त्तव्य अपामार्जनकं शुभम्॥२५॥
अनेन सर्वदुष्टानि प्रशमं यान्त्यसंशयः।
सर्वभूतहितार्थाय कुर्यात्तस्मात्सदैव हि॥२६॥

अपामार्जनस्तोत्रं समाप्तम्



## अथ विष्णुस्तवः

आदाय वेदाः सकलाः समुद्रान्निहत्य शङ्खं रिपुमत्युदग्रम्।
दत्ताः पुरा येन पितामहाय विष्णुं तमादिं भज मत्स्यरूपम्॥१॥
दिव्यामृतार्थं मथिते महाब्धौ देवासुरैर्वासुकिमन्दराद्यैः।
भूमिर्महावेगविघूर्णितायास्तं कूर्ममाधारगतं नमामि॥२॥
समुद्रकाञ्ची सरिदुत्तरीया वसुन्धरामेरुकिरीटभारा।
दन्ताग्रतो येन समुद्धृता भूस्तमादिकालं शरणं प्रपद्ये॥३॥
भक्तार्तिभङ्गक्षमया प्रियायाः स्तम्भान्तरालादुदितो नृसिंहः।
रिपुं सुराणां निशितैर्नखाग्रैर्विदारयन्तं न च विस्मरामि॥४॥
चतुःसमुद्राभरणा धरित्री न्यासाय नालं चरणस्य यस्य।
एकस्य नान्यस्य पदं सुराणां त्रिविक्रमं सर्वगतं नमामि॥५॥

त्रिःसप्तवारं नृपतीन्निहत्य यस्तर्पणं रक्तमयं पितृभ्यः ।
चकार दोर्दण्डबलेन सम्यक्तमादिशूरं प्रणमामि विष्णुम् ॥६॥
कुले रघूनां समवाप्य जन्म विधाय सेतुं जलधेर्जलान्तम् ।
लब्धेश्वरं यः समयाञ्चकार सीतापतिं तं प्रणमामि भक्त्या ॥७॥
हलेन सर्वान् नृपतीन्निकृष्य चकार चूर्णं मुषलप्रहारैः ।
यः कृष्णमासाद्य बलं बलीयान् भक्त्या भजेत्तं बलभद्ररामम् ॥८॥
पुरा सुराणामसुरान् विजेतुं सभावयन् चीवरचिह्नवेशम् ।
चकार यः शास्त्रममोघकल्पं तं मूलभूतं प्रणतोऽस्मि बुद्धम् ॥९॥
कल्पावसाने निशितैः खुराग्रैः संघट्टयामास निमेषमात्राम् ।
यस्तेजसा निर्दहतीति भीमो विष्ण्वात्मकं तं तुरगं भजामः ॥१०॥
शङ्खं सुचक्रं सुगदां सरोजं दोर्भिर्दधानं गरुडाधिरूढम् ।
श्रीवत्सचिह्नं जगदादिमूलं तमालनीलं हृदि विष्णुमीडे ॥११॥
क्षीराम्बुधौ शेषविशेषतल्पे शयानमन्तःस्मितशोभिवक्त्रम् ।
उत्फुल्लनेत्राम्बुजमम्बुजाभमाद्यं श्रुतीनामसकृत्स्मरामि ॥१२॥
प्रीणयेदनया स्तुत्या जगन्नाथं जगत्त्रयम् ।
धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥१३॥

इति विष्णुस्तोत्रं समाप्तम्



## अथ सरस्वतीस्तोत्रम्

ह्रीं ह्रीं हृद्येकबीजे शशिरुचिकमलाकल्पविस्पष्टशोभे
भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे ।
पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसम्पादयित्रि
प्रोत्प्लुष्टाज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥१॥
ऐं ऐं ऐं इष्टमन्त्रे कमलभवमुखाम्भोजभूतिस्वरूपे ।
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
न स्थूले नापि सूक्ष्मेऽप्यविदित निष्कले नित्यशुद्धे ॥२॥
ह्रीं ह्रीं ह्रीं जन्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते
मातर्मातर्नमस्ते दह दह जड़तां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे
मार्गातीतप्रभावे भव मम वरदा शारदे शुभ्रहारे ॥३॥

धीर्धीर्धीर्धारणाख्ये धृतिमतिनुतिभिर्नामभिः कीर्त्तनीये ।
नित्येऽनित्ये निमित्ते मुनिगणनमिते नित्यशुद्धे सुवर्णे ।
मात्रे मात्रार्द्धतत्त्वे नतिमतिमतिदे माधवप्रीतिदाने ॥४॥
ह्रीं क्षीं धीं ह्रींस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते
सन्तुष्टाकारचित्ते स्मितमुखि सुभगे स्तम्भिनी स्तम्भविद्ये ।
मोहे मुग्धप्रभावे कुरु मम कुमतिध्वान्तविध्वंसमीड्ये
गीर्गौर्वाग्भारतीं त्वं कविवृषरसनासिद्धिदा सिद्धविद्या ॥५॥
स्तौमि त्वां त्वाञ्च वन्दे भज मम रसनां मां कदाचित्त्यजेथाः
मा मे बुद्धिर्विबुद्धा भवतु न च मनो देवि मे यातु पापम् ।
मा मे दुःखं कदाचिद्विपदि च समयेऽप्यस्तु मे नाकुलत्वं
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदाचित् ॥६॥
इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो
वाणीं वाचस्पतेरप्यभिमतविभवो वाक्पटुर्मृष्टपङ्कः ।
न स्यादिष्टार्थलाभो सुतमिव सततं पालयेत्तञ्च देवी
सौभाग्यं तस्य गेहे प्रसरति कविता विघ्नमस्तं प्रयाति ॥७॥
ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ।
सारस्वतस्तोत्रपाठाद् भवेदिष्टार्थलाभवान् ॥८॥
पक्षद्वयेऽपि यो भक्त्या त्रयोदशैकविंशतिम् ।
अविच्छेद्यं पठेद्धीमान् ध्यात्वा देवीं सरस्वतीम् ॥९॥
शुक्लाम्बरधरां देवीं शुक्लाभरणभूषिताम् ।
वाञ्छितं फलमाप्नोति स लोके नात्र संशयः ॥१०॥
इति ब्रह्मा स्वयं प्राहुः सरस्वत्या स्तवं शुभम् ।
प्रयत्नेन पठेन्नित्यं सोऽमृतत्वञ्च गच्छति ॥११॥

इति ब्रह्मकृतं सरस्वतीस्तोत्रं समाप्तम्



## अथ प्रचण्डचण्डिकास्तोत्रम्

नाभौ शुद्धसरोजमध्यविलसद्बन्धूकपुष्पारुणं
भास्वद्भास्करमण्डलं तदुदरे तद्योनिचक्रं महत् ।
तन्मध्ये विपरीतमैथुनरतप्रद्युम्न तत्कामिनी-
पृष्ठस्थां तरुणार्ककोटिविलसत्तेजःस्वरूपां शिवाम् ॥१॥

वामे छिन्नशिरोधरां तदितरे पाणौ महत्कर्त्रिकां
प्रत्यालीढपदां दिगन्तवसनामुन्मुक्तकेशस्रजाम्।
च्छिन्नात्मीयशिरःसमुल्लसदसृग्धारं पिबन्तीं परां
बालादित्यसमप्रकाशविलसन्नेत्रत्रयोद्भासिनीम् ॥२॥
वामादन्यत्र नालं बहुबहुलगलद्रक्तधाराभिरुच्चैः
पायन्तीमस्थिभूषां करकमललसत्कर्त्तृकामुग्ररूपाम्।
रक्ताभां रक्तकेशीमपगतवसनां वर्णिनीमात्मशक्तिं
प्रत्यालीढोरुपादामरुणितनयनां योगिनीं योगनिद्राम् ॥३॥
दिग्वस्त्रां मुक्तकेशीं प्रलयघनघटां घोररूपां प्रचण्डां
दंष्ट्रादुष्प्रेक्ष्यवक्त्रोदरविवरलसल्लोलजिह्वाग्रभासाम्।
विद्युल्लोलाक्षियुग्मं हृदयतटलसद्भागिभीभां सुमूर्त्तिं
सद्यश्छिन्नात्मकण्ठप्रगलितरुधिरैर्डाकिनीं वर्द्धयन्तीम् ॥४॥
ब्रह्मेशानाच्युताद्यैः शिरसि विनिहितामन्दपादारविन्दै-
रात्मज्ञैर्योगिमुख्यैः प्रतिपदमनिशं चिन्तिताचिन्त्यरूपाम्।
संसारे सारभूतां त्रिभुवनजननीं छिन्नमस्तां प्रशस्ता-
मिष्टां तामिष्टदात्रीं कलिकलुषहरां चेतसा चिन्तयामि ॥५॥
उत्पत्तिस्थितिसंहृतिर्घटयितुं धत्ते त्रिरूपां तनुं
त्रैगुण्याज्जगतो यदीयविकृतिर्ब्रह्माच्युतः शूलभृत्।
तामाद्यां प्रकृतिं स्मरामि मनसा सर्वार्थसंसिद्धये
यस्याः स्मेरपदारविन्दयुगले लाभं भजन्तेऽमराः ॥६॥
अलिपिशितपरस्त्रीयोगपूजापरोऽहं
बहुविधजनभावारम्भसम्भावितोऽहम्।
पशुजनविरतोऽहं भैरवीसंस्थितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम् ॥७॥
इदं स्तोत्रं महापुण्यं ब्रह्मणा भाषितं पुरा।
सर्वसिद्धिप्रदां साक्षान्महापातकनाशनम् ॥८॥
यः पठेत्प्रातरुत्थाय देव्याः सन्निहितोऽपि वा।
तस्य सिद्धिर्भवेद् देवि वञ्छितार्थप्रदायिनी ॥९॥
धनं धान्यं सुतं जायां हयं हस्तिनमेव च।
वसुन्धरां महाविद्यामष्टसिद्धिर्लभेद् ध्रुवम् ॥१०॥
वैयाघ्राजिनरञ्जिते स्वजघने रम्ये प्रलम्बोदरे।

कर्त्रीं कुन्दरुचिं विचित्रललितां ज्ञानं दधाने पदे।
मातर्भक्तजनानुकम्पिनि महामायेऽस्तु तुभ्यं नमः ॥११॥

इति प्रचण्डचण्डिकास्तोत्रं समाप्तम्



## अथ प्रचण्डचण्डिकाकवचम्

भैरव उवाच

शृणु वक्ष्यामि देवेशि सर्वदेवनमस्कृते।
त्रैलोक्यविजयं नाम कवचं सर्वमोहनम् ॥१॥
सर्वविद्यामयं साक्षात् सुरासुरजयप्रदम्।
धारणात् पठनादीशस्त्रैलोक्यविजयी विभुः ॥२॥
ब्रह्मा नारायणो रुद्रो धारणात्पठनाद्यतः।
कर्त्ता पाता च संहर्त्ता भुवनानां सुरेश्वरि ॥३॥
न देयं परशिष्येभ्यो ह्यभक्तेभ्यो विशेषतः।
देयं शिष्याय भक्ताय प्राणेभ्योऽप्यधिकाय च ॥४॥
देव्याश्च छिन्नमस्तायाः कवचस्य तु भैरवः।
ऋषिर्विराट्छन्दश्च देवता छिन्नमस्तका ॥५॥
त्रैलोक्यविजये मुक्तौ विनियोगः प्रकीर्त्तितः।
हुंकारो मे शिरः पातु छिन्नमस्ता बलप्रदा ॥६॥
ह्रीं हुं हूं ऐं त्र्यक्षरी पातु भालं रक्ता दिगम्बरी।
श्रीं ह्रीं हूं ऐं दृशौ पातु मुण्डकर्त्रींधराऽपि सा ॥७॥
सा विद्या प्रणवाद्यन्ता श्रुतियुग्मं सदावतु।
वज्रवैरोचनीये हुं फट् स्वाहा च ध्रुवादिका ॥८॥
घ्राणं पातु छिन्नमस्ता स्वमुण्डकर्त्रींधारिणी।
श्रीमायाकूर्चवाग्बीजैर्वज्रवैरोचनीये हुं ॥९॥
हुं फट् स्वाहा महाविद्या षोडशी ब्रह्मरूपिणी।
स्वपार्श्वे बालिकाञ्चासृग्धारां पाययती मुदा ॥१०॥
वदनं सर्वतः पातु छिन्नमस्ता सशक्तिका।
मुण्डकर्त्रींधरा रक्ता साधकाभीष्टदायिनी ॥११॥
वर्णिनी डाकिनी युक्ता सापि मामभितोऽवतु।
रसाद्या पातु जिह्वाञ्च लज्जाद्या पातु कण्ठकम् ॥१२॥
कूर्चाद्या हृदयं पातु वागाद्या स्तनयुग्मकम्।
रमया पुटिता विद्या पार्श्वौ पातु सुरेश्वरी ॥१३॥

मायया पुटिता पातु नाभिदेशं दिगम्बरी।
कूर्चेन पुटिता देवी पृष्ठदेशं सदावतु ॥१४॥
वाग्बीजपुटिता चैषा मध्यं पातु सशक्तिका।
ईश्वरी कूर्चवाग्बीजे वज्रवैरोचनीये हुं ॥१५॥
फट्स्वाहेति महाविद्या सूर्यकोटिसमप्रभा।
छिन्नमस्ता सदा पायादुरुयुग्मं सशक्तिका ॥१६॥
ह्रीं हूं वर्णिनी जानु श्रीं ह्रीं हुं च डाकिनीपदम्।
सर्वविद्यास्थिता नित्या सर्वाङ्गं मे सदावतु ॥१७॥
प्राच्यां पायादेकलिङ्गा योगिनी पावकेऽवतु।
डाकिनी दक्षिणे पातु श्रीमहाभैरवी च माम् ॥१८॥
नैर्ऋत्यां सततं पातु भैरवी पश्चिमेऽवतु।
इन्द्राक्षी पातु वायव्येऽसिताङ्गी पातु चोत्तरे ॥१९॥
संहारिणी सदा पातु शिवकोणे सकर्त्तृका।
क्रीं क्रीं क्रीं पातु सा पूर्वे हुं हुं मां पातु पावके ॥२०॥
ह्रीं ह्रीं मां दक्षिणे पातु दक्षिणे कालिकेऽवतु।
क्रीं क्रीं क्रीं चैव नैर्ऋत्यां हुं हुं मां पश्चिमेऽवतु ॥२१॥
ह्रीं ह्रीं पातु मरुत्कोणे स्वाहा पातु सदोत्तरे।
महाकाली खड्गहस्ता रक्षःकोणे सदावतु ॥२२॥
तारो माया वधु कूर्च्चं फट्कारोऽयं महामनुः।
खड्गकर्त्रीधरा तारा चोर्ध्वदेशं सदावतु ॥२३॥
ह्रीं स्त्रीं हुं फट् पाताले मां पातु चैकजटा सती।
तारास्त्ररहिता खेऽव्यान्महानीलसरस्वती ॥२४॥
इति ते कथितं देव्याः कवचं मन्त्रविग्रहम्।
यद्धृत्वा पठनाद्भीमः क्रोधाख्यो भैरवः प्रभुः ॥२५॥
सुरासुरमुनीन्द्राणां कर्त्ता हर्त्ता भवेत्स्वयम्।
यस्याज्ञया मधुमती याति सा साधकान्तिकम् ॥२६॥
भूतिन्याद्याश्च योगिन्या यक्षिण्याद्याश्च खेचराः।
आज्ञां गृह्णन्ति तास्तस्य कवचस्य प्रसादतः ॥२७॥
देवीमभ्यर्च्च्य गन्धाद्यैर्मूलेनैव पठेत् सकृत्।
संवत्सरकृतायास्तु पूजायाः फलमाप्नुयात् ॥२८॥

इति भैरवीतन्त्रे छिन्नमस्ताकल्पे त्रैलोक्यविजयं
नाम छिन्नमस्ताकवचं समाप्तम्

●

# अथ बगलामुखीकवचम्

चलत्कनककुण्डलोल्लसितचारुगण्डस्थलीं
लसत्कनकचम्पकद्युतिमदिन्दुबिम्बाननाम् ।
गदाहतविपक्षकां कलितलोलजिह्वाञ्चलां
स्मरामि बगलामुखीं विमुखसन्मनःस्तम्भिनीम् ॥१॥
पीयूषोदधिमध्यचारुविलसद्रक्तोत्पले मण्डले
यत्सिंहासनमौलिपातितरिपुप्रेतासनाध्यासिनीम् ।
स्वर्णाभां करपीडितारिरसनां भ्राम्यद्गदाविभ्रमा-
मित्थं ध्यायति यान्ति तस्य सहसा सद्योऽथ सर्वापदः ॥२॥
देवी तच्चरणाम्बुजार्चनकृते यः पीतपुष्पाञ्जलिं
भक्त्या वामकरे विधाय च मनुं मन्त्री मनोज्ञाक्षरम् ।
पीठध्यानपरोऽथ कुम्भकवशद्बीजं स्मरेत्पार्थिवं
तस्या मित्रमुखस्य वाचि हृदये जाड्यं भवेत्तत्क्षणात् ॥३॥
वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्वविच्च जड़ति जन्मन्त्रिणा यन्त्रितः
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः ॥४॥
मन्त्रस्तादनलं विपक्षदलने स्तोत्रं पवित्रञ्च ते
यन्त्रं वादिनियन्त्रणं त्रिजगतां जैत्रन्तु चित्रं नुते ।
मातः श्रीबगलेति नाम ललितं यस्यास्ति जन्तोर्मुखे
तन्नामग्रहणेन संसदि मुखस्तम्भो भवेद्वादिनाम् ॥५॥
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्र्यविद्रावणं
भूभृद्भीशमनं बलान्मृगदृशां चेतःसमाकर्षणम् ।
सौभाग्यैकनिकेतनं मम दृशः कारुण्यपूर्णामृतं
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥६॥
मातर्भञ्जय मे विपक्षवदनं जिह्वां चलां कीलय
ब्राह्मीं मुद्रय नाशयाशु धिषणामुग्रां गतिं स्तम्भय ।
शत्रुंश्चूर्णय देवि तीक्ष्णगदया गौराङ्गि पीताम्बरे
विघ्नौघं बगले हर प्रणमतां कारुण्यपूर्णेक्षणे ॥७॥
मातर्भैरवि भद्रकालि विजये वाराहि विश्वाश्रये
श्रीविद्ये समये महेशि बगले कामेशि रामे रमे ।

मातङ्गि त्रिपुरे परात्परतरे स्वर्गापवर्गप्रदे
दासोऽहं शरणागतः करुणया विश्वेश्वरि त्राहि माम् ॥८॥
संरम्भे चौरसङ्घे प्रहरणसमये बन्धने व्याधिमध्ये
विद्यावादे विवादे प्रकुपितनृपतौ दिव्यकाले निशायाम् ।
वश्ये वा स्तम्भने वा रिपुवधसमये निर्जने वा वने वा
गच्छैस्तिष्ठंस्त्रिकालं यदि पठति शिवं प्राप्नुयादाशु धीरः ॥९॥
नित्यं स्तोत्रमिदं पवित्रमिह यो देव्याः पठत्यादरात्
धृत्वा यन्त्रमिदं तथैव समरे बाहौ करे वा गले ।
राजानोऽप्यरयो मदान्धकरिणः सर्पा मृगेन्द्रादिका-
स्ते वै यान्ति विमोहिता रिपुगणा लक्ष्मीः स्थिराः सिद्धयः ॥१०॥
त्वं विद्या परमा त्रिलोकजननी विघ्नौघसम्भेदिनी
योषाकर्षणकारिणी जनमनःसम्मोहसन्दायिनी ।
स्तम्भोत्सारणकारिणी पशुमनःसम्मोहसन्दायिनी
जिह्वां कीलय भैरवी विजयते ब्रह्मादिमन्त्रो यथा ॥११॥
विद्यां लक्ष्मीं सर्वसौभाग्यमायुः पुत्रैः पौत्रैः सर्वसाम्राज्यसिद्धिम् ।
मानं भोगो वश्यमारोग्यसौख्यं प्राप्तं तत्तद्भूतलेऽस्मिन्नरेण ॥१२॥
यत्कृतं जपसन्नाहं पतितं परमेश्वरम् ।
दुष्टानां निग्रहार्थाय तं गृहाण नमोऽस्तु ते ॥१३॥
ब्रह्मास्त्रमिति विख्यातं त्रिषु लोकेषु विश्रुतम् ।
गुरुभक्ताय दातव्यं न देयं यस्य कस्यचित् ॥१४॥
पीताम्बरां द्विभुजाञ्च त्रिनेत्रां गोत्रकोज्ज्वलम् ।
शीलां मुद्गरहस्ताञ्च स्मरेत्तां बगलामुखीम् ।
प्रातर्मध्याह्नकाले स्तवपठनमिदं कार्यसिद्धिप्रदं स्यात् ॥१५॥

इति रुद्रयामले बगलामुखीस्तोत्रं समाप्तम्

●

## अथान्नपूर्णास्तोत्रम्

नमः कल्याणदे देवि नमः शङ्करवल्लभे ।
नमो भक्तप्रिये देवि अन्नपूर्णे नमोऽस्तु ते ॥१॥
नमो मायागृहीताङ्गि नमः शङ्करवल्लभे ।
माहेश्वरि नमस्तुभ्यमन्नपूर्णे नमोऽस्तु ते ॥२॥

महामाये शिवे धर्मपत्नीरूपे हरप्रिये।
वाञ्छादात्रि जगद्धात्रि अन्नपूर्णे नमोऽस्तु ते॥३॥
षट्कोणपद्ममध्यस्थे षडङ्गयुवतीमये।
ब्रह्मण्यादिस्वरूपे च अन्नपूर्णे नमोऽस्तु ते॥४॥
देवि चन्द्रकृतापीड़े सर्वसाम्राज्यदायिनि।
सर्वानन्दकरे देवि अन्नपूर्णे नमोऽस्तु ते॥५॥
इन्द्राण्यञ्चितपादाब्जे रुद्रादिरूपधारिणी।
सर्वसम्पत्प्रदे देवि अन्नपूर्णे नमोऽस्तु ते॥६॥
पूजाकाले पठेद्यस्तु स्तोत्रमेतत्समाहितः।
तस्य गेहे स्थिरा लक्ष्मीर्जायते नात्र संशयः॥७॥
प्रातःकाले पठेद्यस्तु मन्त्रं जापपुरःसरम्।
तस्य चान्नसमृद्धिः स्याद्वर्द्धमाना दिने दिने॥८॥
यस्मै कस्मै न दातव्यं न प्रकाश्यं कदाचन।
प्रकाशात्कार्यहानिः स्यात्तस्माद्यत्नेन गोपयेत्॥९॥

इत्यन्नपूर्णास्तोत्रं समाप्तम्



## अथान्नपूर्णाकवचम्

देव्युवाच

कथिताश्चान्नपूर्णाया या या विद्याः सुदुर्लभाः।
कृपया कथिताः सर्वाः श्रुताश्चाधिगता मया॥१॥
साम्प्रतं श्रोतुमिच्छामि कवचं यत् पुरोदितम्।
त्रैलोक्यमङ्गलं नाम कवचं मन्त्रविग्रहम्॥२॥

ईश्वर उवाच

शृणु पार्वति वक्ष्यामि सावधानावधारय।
ब्रह्मविद्यास्वरूपञ्च महदैश्वर्यदायकम्॥३॥
पठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्यमाप्नुयात्।
त्रैलोक्यरक्षणस्यास्य कवचस्य ऋषिः शिवः॥४॥
छन्दो विराडन्नपूर्णा देवता सर्वसिद्धिदा।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः॥५॥

ह्रीं नमो भगवत्यन्ते माहेश्वरिपदं ततः ।
अन्नपूर्णे ततः स्वाहा चैषा सप्तदशाक्षरी ॥६॥
पातु मामन्नपूर्णा सा या ख्याता भुवनत्रये ।
विमाया प्रणवाद्यैषा तथा सप्तदशाक्षरी ॥७॥
पात्वन्नपूर्णा सर्वाङ्गं रत्नकुम्भान्नपात्रदा ।
श्रीबीजाद्या भ्रुवौ पातु कण्ठं वाग्बीजपूर्विका ॥८॥
कामबीजादिका चैषा हृदयान्ते महेश्वरि ।
तारं ह्रीं श्रीं नमोऽन्ते च भगवतिपदं ततः ॥९॥
माहेश्वरिपदं चान्नपूर्णे स्वाहेति पातु मे ।
नाभिमेकोनविंशार्णा पायान्माहेश्वरी सदा ॥१०॥
तारं माया रमा कामः षोडशार्णास्ततः परम् ।
ध्वजञ्च सर्वदा पातु विंशत्यर्णात्मिका च या ॥११॥
अन्नपूर्णा महाविद्या ह्रीं पातु भुवनेश्वरी ।
शिरः श्रीं ह्रीं तथा क्लीञ्च त्रिपुटा पातु मे गुदम् ॥१२॥
षड्दीर्घभाजा बीजेन षडङ्गानि पुनन्तु माम् ।
करौ पादौ सदा पातु रमा कामो ध्रुवस्तथा ॥१३॥
इन्द्रो मां पातु पूर्वे च वह्निकोणेऽनलेऽवतु ।
यमो मां दक्षिणे पातु नैर्ऋत्यां निर्ऋतिश्च माम् ॥१४॥
पश्चिमे वरुणः पातु वायव्यां पवनोऽवतु ।
कुबेरश्चोत्तरे पातु मामैशान्यां शिवोऽवतु ॥१५॥
ऊर्ध्वाधः सततं पातु ब्रह्मानन्तो यथाक्रमात् ।
वज्राद्याश्चायुधः पान्तु दशदिक्षु यथाक्रमात् ॥१६॥
इति ते कथितं पुण्यं त्रैलोक्यरक्षणं परम् ।
यद्धृत्वा पठनाद्देवाः सर्वैश्वर्यमवाप्नुयुः ॥१७॥
ब्रह्मा विष्णुश्च रुद्रश्च पठनाद्धारणाद्यतः ।
सृजत्यवति हन्त्येव कल्पे कल्पे पृथक्पृथक् ॥१८॥
पुष्पाञ्जल्यष्टकं देव्यै मूलेनैव पठेत्ततः ।
युगायुतकृतायास्तु पूजायाः फलमाप्नुयात् ॥१९॥
चाञ्चल्यरहिता लक्ष्मीः पुत्रपौत्रावधिस्थिता ।
वाणी वक्त्रे वसेत्तस्य सत्यं सत्यं न संशयः ॥२०॥
अष्टोत्तरशतञ्चास्य पुरश्चर्याविधिः स्मृतः ।
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद्यदि ॥२१॥

कण्ठे वा दक्षिणे बाहौ सोऽपि सर्वतपोमयः ।
ब्रह्मास्त्रादीनि शस्त्राणि तद्गात्रं प्राप्य पार्वति ॥२२॥
माल्यानि कुसुमान्येव भवन्त्येव न संशयः ॥२३॥

इति भैरवतन्त्रे अन्नपूर्णाकवचं समाप्तम्



## अथ भुवनेश्वरीस्तवः

अथानन्दमयीं साक्षात् शब्दब्रह्मस्वरूपिणीम् ।
इड़े सकलसम्पत्त्यै जगत्कारणमम्बिकाम् ॥१॥
आद्यामशेषजननीमरविन्दयोने
विष्णोः शिवस्य च वपुः प्रतिपादयित्रीम् ।
सृष्टिस्थितिक्षरकरीं जगतां त्रयाणां
स्तुत्वा गिरं विमलयाम्यहमम्बिके त्वाम् ॥२॥
पृथ्व्या जलेन शिखिना मरुताम्बरेण
होत्रेन्दुना दिनकरेण च मूर्त्तिभाजः ।
देवस्य मन्मथरिपोरपि शक्तिमत्ता
हेतुस्तमेव खलु पर्वतराजपुत्रि! ॥३॥
त्रिस्रोतसः सकलदेवसमर्चितायाः
वैशिष्ट्यकारणमवैमि तदेव मातः ।
त्वत् पादपङ्कजपरागपवित्रितासु
शम्भोर्जटासु सततं परिवर्त्तनं यत् ॥४॥
आनन्दयेत्कुमुदिनीमधिपः कलानां
नान्यानि नः कमलिनीमथ नेतरां वा ।
एकस्य मोदनविधौ परमेक इष्टे
त्वस्तु प्रपञ्चमभिनन्दयसि स्वदृष्ट्या ॥५॥
अध्याप्यशेषजगतां नवयौवनासि
शैलाधिराजतनयाप्यतिकोमलासि ।
त्रय्याः प्रसूरपि तया न समीक्षितासि
ध्येयापि गौरि मनसो न पथि स्थितासि ॥६॥
आसाद्य जन्म मनुजेषु चिराद्दुरापं
तत्रापि पाटवमवाप्य निजेन्द्रियाणाम् ।

नाभ्यर्चयन्ति जगतां जनयित्रि ये त्वां
निःश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥७॥
कर्पूरचूर्णहिमवारिविलोड़ितेन
ये चन्दनेन कुसुमैश्च सुजातगन्धैः।
आराधयन्ति हि भवानि समुत्सुका त्वां
ते खल्वशेषभुवनाधिभुवः प्रथन्ते ॥८॥
आविश्य मध्यपदवीं प्रथमे सरोजे
सुप्ता हि राजसदृशी विरचय्य विश्वम्।
विद्युल्लतावलयविभ्रममुद्वहन्ती
पद्मानि पञ्च विदलया खमश्नुवाना ॥९॥
तन्निर्गतामृतरसैरभिषिच्य गात्रं
मार्गेण तेन निलयं पुनरप्यवाप्ता।
येषां हृदि स्फुरति जातु न ते भवेषु
मातर्महेश्वरकुटुम्बिनि गर्भभाजः ॥१०॥
आलम्बिकुण्डलभरामभिरामवक्त्रा-
मापीवरस्तनतटीं तनुवृत्तमध्याम्।
चिन्ताक्षसूत्रकलसां लिखिताढ्यहस्ता-
मावर्त्तयामि मनसा तव गौरिमूर्त्तिम् ॥११॥
आस्थाय योगमवजित्य च वैरिषट्क-
मावध्य चेन्द्रियगणं मनसि प्रसन्ने।
पाशाङ्कुशाभयवराढ्यकरां सुवक्त्रा-
मालोकयन्ति भुवनेश्वरि योगिनस्त्वाम् ॥१२॥
उत्तप्तहाटकनिभा करिभिश्चतुर्भि-
रावर्जितामृतघटैरभिषिच्यमाना।
हस्तद्वयेन ललिते रुचिरे वहन्ती
पद्मापि साभयवरा भवसि त्वमेव ॥१३॥
अष्टाभिरुग्रविविधायुधवाहिनीभि-
र्दोर्वल्लरीभिरधिरुह्य मृगाधिराजम्।
दूर्वादलद्युतिरमर्त्त्यविपक्षपक्षान्
न्यक्कुर्वती त्वमसि देवि भवानि दुर्गा ॥१४॥
आविर्निदाघजलशीकरशोभिवक्त्रां
गुञ्जाफलेन परिकल्पितहारयष्टिम्।

पत्रांशुकामसितकान्तिमनङ्गतन्त्रा-
माद्यां पुलिन्दतरुणीमसकृत् स्मरामि ॥१५॥
हंसैर्गतिक्वणितनूपुरदूरकृष्टे-
मूर्त्तैरिवाप्तवचनैरनुगम्यमानौ ।
पद्मारिवोर्ध्वमुखरुढसुजातनालौ
श्रीकण्ठपत्नि शिरसैव दधे ज्वलाङ्घ्रि ॥१६॥
द्वाभ्यां समीक्षितमतृप्तिमतीव दृग्भ्या-
मुत्पाद्य भालनयनं वृषकेतनेन ।
सान्द्रानुरागतरलेन निरीक्ष्यमाणे
जङ्घे उभे अपि भवानि तवानतोऽस्मि ॥१७॥
ऊरूं स्मरामि जितहस्तिकरावलेपो
स्थौल्येन मार्दवतया परिभूतरम्भौ ।
श्रोणीभरस्य सहनौ परिकल्प्य दत्तौ
स्तम्भाविवाम्बवयसा तव मध्यमेन ॥१८॥
श्रोणौ स्तनौ च युगपत्प्रथयिष्यतोच्चै-
र्बाल्यात् परेण वयसा परिकृष्टसारः।
रोमावलीविलसितेन विभाव्य मूर्त्ति-
मध्यस्तव स्फुरतु मे हृदयस्य मध्ये ॥१९॥
सख्या स्मरस्य हरनेत्रहुताशभीरो-
र्लावण्यवारिभरितं नवयौवनेन ।
आपाद्य दत्तमिव पल्लवमप्रघृष्यं
नाभिं कदापि तव देवि न विस्मरेयम् ॥२०॥
ईशोपगूढपिशुनं भसितं दधाने
काश्मीरकर्दममनुस्तनपङ्कजे ते ।
स्नातोत्थिस्य करिणः क्षणलक्ष्यफेणौ
सिन्दूरितौ स्मरयतः समदस्य कुम्भौ ॥२१॥
कण्ठातिरिक्तगलदुज्ज्वलकान्तिधारा-
शोभौ भुजौ निजरिपोर्मकरध्वजेन ।
कण्ठग्रहाय रचितौ किल दीर्घपाशौ
मातर्मम स्मृतिपथं न विलङ्घयेताम् ॥२२॥
नात्यायतं रुधिरकम्बुविलासचौर्यं
भूषाभरेण विविधेन विराजमानम् ।

कण्ठं मनोहरगुणं गिरिराजकन्ये
सञ्चिन्त्य तृप्तिमुपयामि कदापि नाहम् ॥२३॥
आतायताक्षमभिजातललाटपट्टं
मन्दस्मितेन दरफुल्लकपोलरेखम्।
बिम्बाधरं वदनमुन्नतदीर्घनासं
यस्ते स्मरत्यसकृदम्ब स एव जातः ॥२४॥
आविस्तुषारकरलेखमनल्पगन्ध-
पुष्पोपरि भ्रमदलिव्रजनिर्विशेषम्।
यश्चेतसा कलयते तव केशपाशं
तस्य स्वयं गलति देवि पुराणपाशः ॥२५॥
श्रुतिसुचरितपाकं धीमतां स्तोत्रमेतत्
पठति य इह मर्त्यो नित्यमार्त्तान्तरात्मा।
स भवति पदमुच्चैः सम्पदां पादनम्र-
क्षितिपमुकुटलक्ष्मीलक्षणाणां चिराय ॥२६॥

इति भुवनेश्वरीस्तोत्रं समाप्तम्



## अथ भुवनेश्वरीकवचम्

श्रीदेव्युवाच

भुवनेश्वर्याश्च देवेश! या या विद्याः प्रकाशिताः।
श्रुताश्चाधिगताः सर्वाः श्रोतुमिच्छामि साम्प्रतम् ॥१॥
त्रैलोक्यमङ्गलं नाम कवचं यत् पुरोदितम्।
तत् प्रकाशय देवेश! यदि स्नेहोऽस्ति मां प्रति ॥२॥

ईश्वर उवाच

शृणु पार्वति वक्ष्यामि सावधानावधारय।
त्रैलोक्यमङ्गलं नाम कवचं मन्त्रविग्रहम् ॥३॥
सिद्धविद्यामयं देवि सर्वैश्वर्यप्रदायकम्।
पठनाद्धारणन्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत् ॥४॥
त्रैलोक्यमङ्गलस्यास्य कवचस्य ऋषिः शिवः।
छन्दो विराट् जगद्धात्री देवता भुवनेश्वरी ॥५॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ।
ह्रीं बीजं मे शिरः पातु भुवनेशी ललाटकम् ॥६॥
ऐं पातु दक्षनेत्रं मे ह्रीं पातु वामलोचनम् ।
श्रीं पातु दक्षकर्णं मे त्रिवर्णात्मा महेश्वरी ॥७॥
वामकर्णं सदा पातु ऐं घ्राणं पातु मे सदा ।
ह्रीं पातु वदनं देवी ऐं पातु रसनां मम ॥८॥
वाक्पुटा च त्रिवर्णात्मा कण्ठं पातु परात्मिका ।
श्रीं स्कन्धौ पातु नियतं ह्रीं भुजौ पातु सर्वदा ॥९॥
क्लीं करौ त्रिपुरेशानी त्रिपुरैश्वर्यदायिनी ।
आं पातु हृदयं ह्रीं मे मध्यदेशं सदावतु ॥१०॥
क्रों पातु नाभिदेशं सा त्र्यक्षरी भुवनेश्वरी ।
सर्वबीजं सदा पृष्ठं पातु सर्ववशङ्करी ॥११॥
ह्रीं पातु गुह्यदेशं मे नमो भगवति कटिम् ।
माहेश्वरी सदा पातु सक्थिनी जानुयुग्मकम् ॥१२॥
अन्नपूर्णे सदा पातु स्वाहा पातु पदद्वयम् ।
सप्तदशाक्षरी पायादन्नपूर्णाखिलं वपुः ॥१३॥
तारं माया रमा कामः षोडशार्णा ततः परम् ।
शिरस्था सर्वदा पातु विंशद्वर्णात्मिका परा ॥१४॥
तारं दुर्गे युगं रक्षणि स्वाहेति च दशाक्षरी ।
जयदुर्गा घनश्यामा पातु मां पूर्वतो मुदा ॥१५॥
मायाबीजादिका चैषा दशार्णा च तथापरा ।
उत्तप्तकाञ्चनाभासा जयदुर्गाऽनलेऽवतु ॥१६॥
तारं ह्रीं दुं दुर्गायै च नमोऽष्टार्णात्मिका परा ।
शङ्खचक्रधनुर्बाणधरा मां दक्षिणेऽवतु ॥१७॥
महिषमर्द्दिनी स्वाहा वसुवर्णात्मिका परा ।
नैर्ऋत्यां सर्वदा पातु महिषासुरनाशिनी ॥१८॥
माया पद्मावती स्वाहा सप्तार्णा परिकीर्त्तिता ।
पद्मावती पद्मसंस्था पश्चिमे मां सदावतु ॥१९॥
पाशाङ्कुशपुटां मायैहि परमेश्वरि स्वाहा ।
त्रयोदशार्णा ताराद्या साश्वारूढानिलेऽवतु ॥२०॥
सरस्वती पञ्चशरो नित्यक्लिन्ने मदद्रवे ।
स्वाहा रव्यक्षरी नित्या मामुत्तरे सदावतु ॥२१॥

तारं माया च कवचं खे च ह क्ष ततो वधुः ।
हुं क्षे ह्रीं फट् महाविद्या द्वादशार्णाखिलप्रदा ॥२२॥
त्वरिताष्ठाहिभिः पायाच्छिवकोणे सदा च माम् ।
ऐं क्लीं सौः सा ततो बाला मामूर्ध्वदेशतोऽवतु ॥२३॥
विन्दन्ता भैरवी बाला भूमौ मां सर्वदाऽवतु ।
इति ते कथितं पुण्यं त्रैलोक्यमङ्गलं परम् ॥२४॥
सारात्सारतरं पुण्यं महाविद्यौघविग्रहम् ।
अस्यापि पठनात्सद्यः कुबेरोऽपि धनेश्वरः ॥२५॥
इन्द्राद्याः सकला देवाः धारणात्पठनाद्यतः ।
सर्वसिद्धीश्वराः सन्तः सर्वैश्वर्यमवाप्नुयुः ॥२६॥
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् ।
संवत्सरकृतायास्तु पूजायाः फलमाप्नुयात् ॥२७॥
प्रीतिमन्योन्यतः कृत्वा कमला निश्चला गृहे ।
वाणी च निवसेद्वक्त्रे सत्यं सत्यं न संशयः ॥२८॥
यो धारयति पुण्यात्मा त्रैलोक्यमङ्गलाभिधम् ।
कवचं परमं पुण्यं सोऽपि पुण्यवतां वरः ॥२९॥
सर्वैश्वर्ययुतो भूत्वा त्रैलोक्यविजयी भवेत् ।
पुरुषो दक्षिणे बाहौ नारी वामभुजे तथा ॥३०॥
बहुपुत्रवती भूत्वा वन्ध्यापि लभते सुतम् ।
ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तज्जनम् ॥३१॥
एतत् कवचमज्ञात्वा यो भजेद् भुवनेश्वरीम् ।
दारिद्र्यं परमं प्राप्य सोऽचिरान्मृत्युमाप्नुयात् ॥३२॥

इति रुद्रयामले देवीश्वरसंवादे त्रैलोक्यमङ्गलं
नाम भुवनेश्वरीकवचं समाप्तम्

## अथ त्रिपूटास्तवः

वराभीतिहस्तं द्विबाहुं प्रसन्नं
शिवः सुप्रसन्नं स्वशक्त्योपविष्टम् ।
प्रसन्नास्यबिम्बं प्रकाशस्वरूपं
शिरः पद्ममध्ये गुरुं भावयामि ॥१॥

बकं वह्निसंस्थं त्रिमूर्त्या प्रजुष्टं
शशाङ्केन युक्तं तवाद्यं स्वबीजम्।
सुवर्णप्रभं ये जपन्ति त्रिशक्तेः
श्रियं सौभगत्वं लभन्ते नरास्ते ॥२॥
नमो वायुमित्रं ततो वामनेत्रं
सुधी धामबिम्बं नियोज्यैकवक्त्रम्।
द्वितीयं स्वबीजं सुरश्रेणिवन्द्या-
त्त्वदीयं विभाव्य श्रियं प्राप्नुवन्ति ॥३॥
विरिञ्चिं क्षितिस्थं ततो वामनेत्रं
विधुं नादयुक्तं दिनेशाभबीजम्।
विभाव्यैव सम्मोहयन्ति त्रिलोकीं
जपादीश्वरत्वं लभन्ते नरेन्द्राः ॥४॥
त्रयं सन्नियोज्य स्मराभिप्रिये ये
त्रिसन्ध्यं जपन्ति त्वदङ्गं विभाव्य।
न तेषां रिपुर्वाक्प्रयोगं करोति
स्मरास्तेऽङ्गनानां गृहे श्रीस्तु तेषाम् ॥५॥
मुखे भारती गद्यपद्यप्रबन्धा
न हिंसन्ति हिंस्रोः सुरास्तान्नमन्ति ॥६॥
वने पारिजातद्रुमाणां पृथिव्याः
सुवर्णप्रभायां मणिव्यूहगेहे।
स्मरद्वेदिकायां लसद्रत्नसिंहा-
सने पद्ममष्टारकं संविचिन्त्य ॥७॥
स्फुरत्कर्णिकायां परं योनियुग्मं
तदन्तर्गतामुष्णहेमप्रभां ताम्।
लसत्कुण्डलामिन्दुवक्त्रां त्रिनेत्रां
स्फुरत्कम्बुकण्ठां सुवक्षोजनम्राम् ॥८॥
महारत्नवज्रोल्लसद्वाहुवृन्दैः
सुपद्मद्वयं पाशकं कार्मुकञ्च।
सुवर्णाङ्कुशं पुष्पबाणान्दधानां
बृहद्रत्नभूषां सुमध्यां सुकाञ्चीम् ॥९॥
तुलाकोटिरम्यस्फुरत्पादपद्मां
किरीटाद्यलङ्कारयुक्तां प्रसन्नाम्।

सिते चामरे दर्पणं तत्करण्डं
समुद्गं सुकर्पूरपूर्णं घृताभिः ॥१०॥
त्रिलोकीविधात्रीं जगत्तापहन्त्रीं
जगत्क्षोभकर्त्रीं जगल्लोकधात्रीम्।
सदानन्दपूर्णां हकारार्द्धवर्णां
त्रिबिन्दुस्वरूपां त्रिशक्तिं भजामि ॥११॥
चिरं चिन्तयित्वा तदेतत्स्वरूपां
पुरोयन्त्रमध्ये समावाह्य भक्त्या।
स्वयम्भुप्रसूनादिभिः पूजयित्वा
चतुर्वर्गसिद्धिं लभेत्पामरोऽपि ॥१२॥
श्रियं श्रीपतिं पार्वतीमीश्वरञ्च
रतिं कामदेवं षडङ्गेन सार्द्धम्।
स्वयोनौ तथा मन्त्रमुक्त्वा भवानीं
क्रमात्पूजयित्वा नरेन्द्रो भवेत्सः ॥१३॥
निधी द्वौ च पार्श्वद्वये संविभाव्य
प्रपूज्य महिष्यस्ततो लोकपालाः।
तदस्त्राणि तत्तद्दलाग्रे प्रपूज्य
भवस्याष्टसिद्धिं लभेन्मानवोऽपि ॥१४॥
क्षितित्वं विधात्री जगत्सृष्टिकर्त्री
त्वमायोऽपि विष्णुर्जगत्पालिका च।
त्वमग्निस्तु रुद्रो जगत्क्षेमकर्त्री
त्वमैश्वर्ययुक्ता जगद्वायुरूपा ॥१५॥
त्वमाद्या शिवे शम्भुकान्ते शरण्ये
जगद् ब्रह्मरन्ध्रे सदारं भ्रमीषि।
निराधारगम्या भवस्यैकपुण्या
त्वमाकाशकल्या भवानि प्रसीद ॥१६॥
भवान्तोऽब्धिमध्ये निपात्यैव सर्वं
मुनीनाञ्च गर्वं सुखर्वं करोषि।
अतस्त्वां न जाने चिदानन्दरूपे
प्रकाशस्वरूपे भवानि प्रसीद ॥१७॥
जपित्वा तु विद्यां जनो मन्दचेता
जपन्नेकलक्षं कवित्वं करोति।

विचिन्त्य स्वरूपं त्वदीयं त्रिलोक्यां
लभेद् दुर्लभत्वं भवानि प्रसीद ॥१८॥
त्वमाधारशक्तिस्त्वमाधेयरूपा
जगद्व्यापिका त्वं जगद्व्याप्यरूपा ।
अभावस्त्वमेका गुणातीतरूपा
त्वमेवासि भावो भवानि प्रसीद ॥१९॥
अणुस्त्वं विभुस्त्वं त्वमेवासि विश्वं
स्तुतिः कामवत्या जगत्या विभाति।
तथापि त्वदीया गुणा मां दिशन्ति
स्तुतिं कर्त्तुमेवं भवानि प्रसीद ॥२०॥
इदं स्तोत्रमत्यन्तगुह्यं नरा ये
पठन्ति त्रिसन्ध्यं कुलास्ते जपित्वा ।
न तेषामसाध्यं त्रिलोक्यां जनानां
लभन्ते स्वरूपं भवानि प्रसीद ॥२१॥

इति त्रिपूटास्तोत्रं समाप्तम्



## अथ त्रिपूटाकवचम्

देव्युवाच

भगवन् सर्वधर्मज्ञ सर्वशास्त्रार्थपारग ।
त्रिशक्तिरूप लक्ष्म्याश्च कवचं यत्प्रकाशितम् ॥१॥
सर्वार्थसाधनं नाम कथयस्व मयि प्रभो ।

ईश्वर उवाच

श्रृणु देवि प्रवक्ष्यामि कवचं परमाद्भुतम् ॥२॥
सर्वार्थसाधनं नाम त्रैलोक्ये चातिदुर्लभम् ।
सर्वसिद्धिमयं देवि सर्वैश्वर्यप्रदायकम् ॥३॥
पठनाद्धारणान्मर्त्यस्त्रैलोक्यैश्वर्यभाग्भवेत् ।
सर्वार्थसाधनस्यास्य कवचस्य ऋषिः शिव ॥४॥
छन्दो विराड् त्रिशक्तिः श्री जगद्धात्री च देवता ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥५॥

श्रीं बीजं मे शिवः पातु लक्ष्मीरूपा ललाटकम् ।
ह्रीं पातु दक्षनेत्रं मे वामनेत्रं सुरेश्वरी ॥६॥
क्लीं पातु दक्षकर्णं मे वामं कामेश्वरी तथा ।
लक्ष्मीर्घ्राणं सदा पातु वदनं पातु केशवः ॥७॥
गौरी तु रसनां पातु कण्ठं पातु महेश्वरः ।
स्कन्धदेशं रतिः पातु भुजौ तु मकरध्वजः ॥८॥
शङ्खनिधिः करौ पातु वक्षः पद्मनिधिः सदा ।
ब्राह्मी मध्यं सदा पातु नाभिं पातु महेश्वरी ॥९॥
कुमारी पृष्ठदेशं मे गुह्यं रक्षतु वैष्णवी ।
वाराही सक्थिनी पातु ऐन्द्री पातु पदद्वयम् ॥१०॥
भार्या रक्षतु चामुण्डा लक्ष्मी रक्षतु पुत्रकान् ।
इन्द्रः पूर्वे सदा पातु अग्नेय्यामग्निदेवता ॥११॥
याम्ये यमः सदा पातु वायव्यां वायुदेवता ।
सौम्ये सोमः सदा पातु ऐशान्यामीश्वरोऽवतु ॥१२॥
ऊर्ध्वं प्रजापतिः पातु अधश्चानन्तदेवता ।
राजद्वारे श्मशाने च अरण्ये प्रान्तरे तथा ॥१३॥
जले स्थले चान्तरिक्षे शत्रूणां निचये तथा ।
एताभिः सहिता देवी त्रिबीजात्मा महेश्वरी ॥१४॥
त्रिशक्तिश्च महालक्ष्मीः सर्वत्र मां सदावतु ।
सर्वार्थसाधनं नाम कवचं परमाद्भुतम् ॥१५॥
इति ते कथितं देवि सारात्सारतरं परम् ।
अस्यापि पठनात्सद्यः कुबेरोऽपि धनेश्वरः ॥१६॥
इन्द्राद्याः सकला देवाः धारणात्पठनाद्यतः ।
सर्वसिद्धीश्वराः सन्तः सर्वैश्वर्यमवाप्नुयुः ॥१७॥

इति रुद्रयामले त्रिशक्त्याः सर्वार्थसाधनं नाम कवचं समाप्तम्



## अथापरस्तवः (त्रिपूटादेव्याः)

हेमाजाभां कुटिलचिबुकां रत्नमञ्जीररम्यां
स्तोष्ये स्तोत्रैः प्रणतिबहुलैः सिद्धये सर्वसिद्धेः ।
चापं पाशाम्बुजसरसिजान्यङ्कुशं पुष्पबाणान्
नाविभ्राणां भुवनशुभगैः षड्भुजैस्तु त्रिनेत्राम् ॥१॥

ब्रह्मेन्द्राद्यैरमरनिवहैर्वन्द्यपादाब्जयुग्मां
रम्येऽरण्ये कुसुमविलसत् कल्पभूमिरुहाणाम्।
मध्ये तेषां मणिमयगृहे रत्नसिंहासनस्थां
ग्रैवयाद्यैर्विलसिततनुं शूलिशक्तिं नमामि ॥२॥
ब्रह्मोपेन्द्रत्रिपुरमथनस्वर्निवासिव्रजाना-
मानम्राणां मुकुटमणिभिर्हारिणीराजतौ तौ।
यस्त्वत्पादौ स्मरति जगतामम्बिके हेलया स
जीवन्मुक्तः प्रभवतितरां क्ष्मातले विश्ववन्द्ये ॥३॥
लक्ष्मीमायामदनकलितं सर्वसम्पत्प्रदं हि
बीजैरेभिर्भुवनभिहिते गौरि पूर्णेन्दुवक्त्रे।
मन्त्रं यस्ते जपति करुणाशालिपङ्केरुहाक्षि
क्षिप्रं तस्य प्रभवति गृहे रत्नराशिः सुकेशि ॥४॥
मातस्तेऽहं न हि मम पुलस्त्वं गिरीशकशक्ते
सामुद्रो हि श्रुत इह तरङ्गो न तारङ्ग ईड्ये।
सिन्धुः कुत्र प्रभवति शिवे शैलराजस्य कन्ये
मत्वेदं मां सकरुणभृशा सिञ्च दीनं भवानि ॥५॥
अन्वैश्वर्यं धनमुथसुतारोग्यरूपाणि कीर्त्तिं
भाग्यं भूमिं नतिमतितरां देहि धर्मोऽचलां मे।
त्वत्पादाब्जे स्मरहरशिरोभूषणे भूरि भूरि
दूरीभूतसकलजगतामम्बिकेऽस्तु प्रणामः ॥६॥
ये सेवन्ते चरणयुगलं पर्वतेन्द्रात्मजाया-
स्ते ते भूयो जगति नितरां सन्ति नो देहभाजः।
योगीन्द्राणां मननपथगे हृत्सरोजासनस्थे
कोटीन्द्वर्कद्युतिधरतनो विश्ववन्द्ये नुमस्त्वाम् ॥७॥
सौषुम्नाध्वप्रकटितगते सूक्ष्मविद्युत्प्रकाशे
मूलाधारेष्वपि विजगतामेकचैतन्यरूपे।
षट्चक्रोर्ध्वं नयति निपुणो य परं वामनित्यं
मुक्तस्तेऽस्माद्भवजलनिधेः सन्तरत्येव पारम् ॥८॥
स्तोत्रेणानेन यो मर्त्यस्तोषयेत् त्रिपुटां पराम्।
चञ्चलापि स्थिरा लक्ष्मीर्गेहे तस्यैव तिष्ठति ॥९॥
सिद्धयोऽष्टौ करे मातस्तस्य वश्यं जगत्त्रयम्।
शत्रवो विलयं यान्ति महाप्रज्ञा च जायते ॥१०॥

पठनात् स्तवराजस्य दुःस्वप्नप्रशमो भवेत् ।
वर्षणे लोकश्चाप्नोति सर्वसिद्धिमनुत्तमाम् ॥११॥

इति गन्धर्वतन्त्रे त्रिपुटास्तोत्रं समाप्तम्



## अथ दुर्गायाः शतनामस्तोत्रम्

ईश्वर उवाच

शतनाम प्रवक्ष्यामि श्रृणुष्व कमलानने ।
यस्य प्रसादमात्रेण दुर्गा प्रीता भवेत्सती ॥१॥
ॐ सती साध्वी भवप्रीता भवानी भवमोचनी ।
आर्या दुर्गा जया आद्या त्रिनेत्रा शूलधारिणी ॥२॥
पिनाकधारिणी चित्रा चण्डखण्डा महातपाः ।
मनोबुद्धिरहङ्कारा चित्तरूपा चिता चितिः ॥३॥
सर्वमन्त्रमयी नित्या सत्यानन्दस्वरूपिणी ।
अनन्ता भाविनी भाव्या भव्याऽभव्या सदागतिः ॥४॥
शाम्भवी देवमाता च चिन्तारत्नमयी सदा ।
सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी ॥५॥
अपर्णानेकपर्णा च पाटला पाटलावती ।
पट्टाम्बरपरीधाना कलमञ्जीररञ्जिनी ॥६॥
अमेयविक्रमा क्रूरा सुन्दरी पुरसुन्दरी ।
वनदुर्गा च मातङ्गी मतङ्गमुनिपूजिता ॥७॥
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः ॥८॥
विमलोत्कर्षिणी ज्ञाना क्रियासत्या च बुद्धिदा ।
बहुला बहुलप्रेमा सर्ववाहनवाहना ॥९॥
निशुम्भशुम्भहननी महिषासुरमर्द्दिनी ।
मधुकैटमहन्त्री च चण्डमुण्डविनाशिनी ॥१०॥
सर्वासुरविनाशा च सर्वदानवघातिनी ।
सर्वशास्त्रमयी सत्या सर्वास्त्रधारिणी तथा ॥११॥
अनेकशस्त्रहस्ता च अनेकास्त्रस्य धारिणी ।
कुमारी चैव कन्या च कैशोरी युवती यती ॥१२॥

अप्रौढा चैव प्रौढा च माता वृद्धा बलप्रदा।
महादेवी मुक्तकेशी घोररूपा महाबला ॥१३॥
अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी।
नारायणी भद्रकाली विष्णुमाया जलोदरी ॥१४॥
शिवदूती कराली च अनन्ता परमेश्वरी।
कात्यायनी च सावित्री प्रत्यक्षा ब्रह्मवादिनी ॥१५॥
गोरोचनालक्तककुङ्कुमेन सिन्दूरकर्पूरमधुत्रयेण।
विलिख्य यन्त्रं विधिना विधिज्ञो भवेत्सदा धारयते पुरारिः ॥१६॥
भौमावास्यनिशाभागे चन्द्रे शतभिषां गते।
विलिख्य प्रपठेत्स्तोत्रं स भवेत्सम्पदां पदम् ॥१७॥

इति विश्वसारतन्त्रे दुर्गाशतनामस्तोत्रं समाप्तम्



## अथ दुर्गाकवचम्

श्रृणु देवि प्रवक्ष्यामि कवचं सर्वसिद्धिदम्।
पठित्वा धारयित्वा च नरो मुच्येत सङ्कटात् ॥१॥
इदं गुह्यतमं देवि कवचं तव कथ्यते।
गोपनीयं प्रयत्नेन सावधानावधारय ॥२॥
अज्ञात्वा कवचं देवि दुर्गामन्त्रञ्च यो जपेत्।
स नाप्नोति फलं तस्य परे च नरकं व्रजेत् ॥३॥
उमा देवी शिरः पातु ललाटं शूलधारिणी।
चक्षुषी खेचरी पातु कर्णौ चत्वरवासिनी ॥४॥
सुगन्धा नासिकां पातु वदनं सर्वसाधिनी।
जिह्वाञ्च चण्डिका देवी ग्रीवां सौभद्रिका तथा ॥५॥
अशोकवासिनी चेतो द्वौ बाहू वज्रधारिणी।
कण्ठं पातु महावाणी जगन्माता स्तनद्वयम् ॥६॥
हृदयं ललिता देवी उदरे सिंहवाहिनी।
कटिं भगवती पातु द्वावुरू विन्ध्यवासिनी ॥७॥
एवं स्थितासि देवि त्वं त्रैलोक्यरक्षणात्मिके।
रक्ष मां सर्वगात्रेषु दुर्गे देवि नमोऽस्तु ते ॥८॥
इत्येतत् कवचं देवि महाविद्याफलप्रदम्।
यः पठेत् प्रातरुत्थाय सर्वतीर्थफलं लभेत् ॥९॥

इदं गुह्यतमं देवि कवचं तव कथ्यते ।
गोपनीयं प्रयत्नेन सावधानावधारय ॥१०॥

इति कुञ्जिकातन्त्रे दुर्गाकवचं समाप्तम्



## अथ श्रीविद्यास्तोत्रम्

कल्याणवृष्टिभिरिवामृतपूरिताभि-
र्लक्ष्मीः स्वयंवरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ॥१॥
एतावदेव जननि स्पृहणीयमास्ते
त्वद्वन्दनेषु सलिलस्थसरोजनेत्रे ।
सान्निध्यमुद्यदरुणाम्बुजसोदरस्य
त्वद्विग्रहस्य सुधया परया प्लुतस्य ॥२॥
ईषत्प्रभावकलुषाः कति नाम सन्ति
ब्रह्मादयः प्रतिदिनं प्रलयाभिभूताः।
एकः स एव जननि स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत् प्रणतिं करोति ॥३॥
लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
सम्मोहयन्ति तरुणीर्भुवनत्रयेऽपि ॥४॥
ह्रींकारमेव तव नाम गृणन्ति देवाः
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
त्वं संस्मृतौ यमभयाभिभवं विहाय
दिव्यन्ति नन्दनवने सह लोकपालैः ॥५॥
हस्तः पुरामधिगतं परिपूर्णमानः
क्रूरः कथं न भविता गरलस्ववेगः।
नाश्वासनाय यदि मातरिदं तवार्द्धं
देहस्य शश्वदमृताप्लुतशीतलस्य ॥६॥
सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।

किञ्चित् स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महतीं वसुधां ददाति ॥७॥
कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिनिधिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि बद्धदृष्टिम् ॥८॥
हस्तेतरेदपि निधाय मनांसि चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसाऽमननुस्मरामि
त्वामेव नौमि शरणं जननि त्वमेव ॥९॥
लक्षेषु सत्स्वपि तवाक्षि विलोकनामा-
मालोकय त्रिपुरसुन्दरि मा कदाचित् ॥१०॥
नूनं मया च सदृशं करुणैकपात्रं
जातो जनिष्यति जनो न च जायते वा ॥११॥
ह्रीं ह्रींमिति प्रतिदिनं जपतां तवाख्यां
किं नाम दुर्लभमिह त्रिपुराधिवासे ।
मालाकिरीटमदवारणकारणीयां-
स्तान् सेवते मधुमती स्वयमेव लक्ष्मीः ॥१२॥
सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वद् वन्दनानि दुरिताहरणोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥१३॥
कल्पोपसंहरणकल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशै क्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्त्तिरिका ॥१४॥
लब्धं सदा भवतु मातरिदं त्वदीयं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत् किरीटममृतांशुकलावतसः
रूपं त्रिकोणमुदितं परमामृताक्तम् ॥१५॥
ह्रींकारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित् ।

तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी
वाणी निर्मलसूक्तिभारभरिता जागर्त्ति दीर्घं यशः ॥१६॥

इति ब्रह्मविरचितं कल्याणीस्तोत्रं समाप्तम्



## अथ किङ्किणीस्तोत्रम्

किं किं दुःखं सकलजननि क्षीयते न स्मृतायां
का का कीर्त्तिः कुलकमलिनि प्राप्यते नार्चितायाम् ।
किं किं सौख्यं सुरवरनुते प्राप्यते न स्तुतायां
कं कं योगं त्वयि न तनुते चित्तमालम्बितायाम् ॥१॥
स्मृता भवभयं हंसि पूजितासि शुभङ्करि ।
स्तुता त्वं वाञ्छितं देवि ददामि करुणाकरे ॥२॥
परमानन्दबोधाब्धि रूपे तेजःस्वरूपिणि ।
देववृन्दशिरोरत्ननिघृष्टचरणाम्बुजे ।
चिद्विभ्रान्ति महासत्तामात्रे मात्रे नमोऽस्तु ते ॥३॥
सृष्टिस्थित्युपसंहारे हेतुभूते सनातनि ।
गुणत्रयात्मिकासि त्वं जगतः करणेच्छया ॥४॥
अनुग्रहाय भक्तानां गृहीते दिव्यविग्रहे ।
भक्तस्य मे नित्यपूजायुक्तस्य परमेश्वरि ॥५॥
ऐहिकामुष्मिकीं सिद्धिं देहि त्रिदशवन्दिते ।
भावत्रयपरिम्लानभाजनं त्राहि मां शिवे ॥६॥
नान्यं वदामि न श्रृणोमि न चिन्तयामि
नान्यं भजामि न स्मरामि न चाश्रयामि ।
त्यक्त्वा त्वदीयचरणाम्बुजमादरेण
मां त्राहि देवि कृपया मयि देहि सिद्धिम् ॥७॥
अज्ञानाद्वा प्रमादाद्वा कैवल्यात्साधनस्य च ।
यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥८॥
द्रव्यहीनं क्रियाहीनं श्रद्धामन्त्रविवर्जितम् ।
तत्सर्वं कृपया देवि क्षमस्व त्वं दयानिधे ॥९॥
यन्मया क्रियते कर्म तन्महत्स्वल्पमेव वा ।
तत्सर्वज्ञ जगद्धात्रि क्षन्तव्यमयमञ्जलिः ॥१०॥

इति किङ्किणीस्तोत्रं समाप्तम्



## अथ श्रीकवचम्

### श्रीमहादेव उवाच

श्रृणु देवि प्रवक्ष्यामि कवचं देवदुर्लभम्।
अप्रकाश्यं परं गुह्यं साधकाभीष्टदायकम्॥१॥
कवचस्य ऋषिर्देवि दक्षिणामूर्त्तिरव्ययः।
छन्दः पङ्क्तिः समुद्दिष्टं देवी त्रिपुरसुन्दरी॥२॥
धर्मार्थकाममोक्षाणां विनियोगस्तु साधने।
वाग्भवः कामराजश्च शक्तिबीजं महेश्वरि॥३॥
वाग्भवः पातु शीर्षे मां कामराजस्तथा हृदि।
शक्तिबीजं सदा पातु नाभौ गुह्ये च पादयोः॥४॥
ऐं क्लीं सौर्वदने पातु बाला मां सर्वसिद्धये।
ह्सैं हसकलरीं ह्सौः पातु भैरवी कण्ठदेशतः॥५॥
सुन्दरी नाभिदेशेऽव्याच्छीर्षे कामकला सदा।
भ्रूनासयोरन्तराले महात्रिपुरसुन्दरी॥६॥
ललाटे सुभगा पातु भगा मां कण्ठदेशतः।
भगोदया तु हृदये उदरे भगसर्पिणी॥७॥
भगमाला नाभिदेशे लिङ्गे पातु मनोभवा।
गुह्ये पातु महादेवी राजराजेश्वरी शिवा॥८॥
चैतन्यरूपिणी पातु पादयोर्जगदम्बिका।
नारायणी सर्वगात्रे सर्वकार्ये शुभङ्करी॥९॥
ब्रह्माणी पातु मां पूर्वे दक्षिणे वैष्णवी तथा।
पश्चिमे पातु वाराही उत्तरे च महेश्वरी॥१०॥
आग्नेय्यां पातु कौमारी महालक्ष्मीश्च नैर्ऋते।
वायव्यां पातु चामुण्डा इन्द्राणी पातु ईशके॥११॥
जले पातु महामाया पृथिव्यां सर्वमङ्गला।
आकाशे पातु वरदा सर्वत्र भुवनेश्वरी॥१२॥
इदं तु कवचं देव्या देवानामपि दुर्लभम्।
यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः॥१३॥
नाधयो व्याधयस्तस्य न भयञ्च क्वचिद्भवेत्।
न च मारीभयं तस्य पातकानां भयं तथा॥१४॥

न दारिद्र्यवशं गच्छेत् तिष्ठेन्मृत्युवशे न च।
गच्छेच्छिवपुरं देवि सत्यं सत्यं वदामि ते ॥१५॥
इदं कवचमज्ञात्वा श्रीविद्यां यो जपेत् प्रिये।
स नाप्नोति फलं तस्य प्राप्नुयाच्छस्त्रघातनम् ॥१६॥

इति सिद्धयामले त्रिपुरसुन्दरीकवचं समाप्तम्

## अथ महात्रिपुरसुन्दरी कवचम्

अस्य राजराजेश्वरी श्रीमहात्रिपुरसुन्दरीषोडशीविद्याकवचस्य महादेवऋषिः प्रस्तारः पंक्तिच्छन्दो राजराजेश्वरी महात्रिपुरसुन्दरी देवता सर्वार्थसाधने विनियोगः।

ईश्वर उवाच

पूर्वे मां भैरवी पातु बाला मां पातु दक्षिणे।
मालिनी पश्चिमे पातु त्रासिनी तूत्तरेऽवतु ॥१॥
ऊर्ध्वं पातु महादेवी महात्रिपुरसुन्दरी।
अधस्तात् पातु देवेशी पातालतलवासिनी ॥२॥
आधारे वाग्भवः पातु कामराजस्तथा हृदि।
डामरः पातु मां नित्यं मस्तके सर्वकामदः ॥३॥
ब्रह्मरन्ध्रे सर्वगात्रे छिद्रस्थानेषु सर्वदा।
महाविद्या भगवती पातु मां परमेश्वरी ॥४॥
ऐं क्लीं ललाटे मां पायात् ह्रीं ब्लूं सः पातु नेत्रयोः।
नासायां कर्णयोश्चैव द्रीं द्रैं द्रां द्रीं चिबुके तथा ॥५॥
सौः पातु च गले सह्रीं हृदये नाभिदेशके।
कलह्रीं क्लीं स्त्रीं गुह्यदेशे सह्रींश्च पातु पादयोः ॥६॥
स क्लीं मां सर्वतः पातु कल पातु च सन्धिषु।
सहह्रीं मां सर्वतः पातु सक्लीं पातु च सन्धिषु ॥७॥
जले स्थले तथाकाशे दिक्षु राजगृहे तथा।
हूं क्षे मां त्वरिता पातु सह्रीं सक्लीं मनोभवा ॥८॥
हंसः पातु महादेवी परं निष्कलदेवता।
विजया मङ्गला दूती कल्याणी भगमालिनी।
ज्वाला च मालिनी नित्या सर्वदा पातु मां शिवा ॥९॥

इत्येवं कवचं देवि देवानामपि दुर्लभम्।
तव प्रीत्या मयाख्यातं गोपनीयं प्रयत्नतः ॥१०॥
इदं रहस्यं परमं गुह्याद् गुह्यतरं प्रिये।
धन्यं यशस्यमायुष्यं भोगमोक्षप्रदं शुभम् ॥११॥

इति कुलानन्दसंहितायां श्रीमहात्रिपुरसुन्दरीषोडशीकवचं समाप्तम्

●

## अथ लक्ष्मीस्तोत्रम्

### ईश्वर उवाच

त्रैलोक्यपूजिते देवि! कमले विष्णुवल्लभे।
यथा त्वं सुस्थिरा कृष्णे तथा भव मयि स्थिरा ॥१॥
ईश्वरी कमला लक्ष्मीश्चला भूतिर्हरिप्रिया।
पद्मा पद्मालया सम्पदुच्चैः श्रीः पद्मधारिणी ॥२॥
द्वादशैतानि नामानि लक्ष्मीं सम्पूज्य यः पठेत्।
स्थिरा लक्ष्मीर्भवेत्तस्य पुत्रदारादिभिः सह ॥३॥

इति लक्ष्मीस्तोत्रं समाप्तम्

●

## अथ लक्ष्मीकवचम्

### ईश्वर उवाच

अथ वक्ष्ये महेशानि कवचं सर्वकामदम्।
यस्य विज्ञानमात्रेण भवेत् साक्षात्सदाशिवः ॥१॥
नार्चनं तस्य देवेशि मन्त्रमात्रं जपेन्नरः।
स भवेत् पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः।
विद्यार्थिना सदा सेव्या विशेषे विष्णुवल्लभा ॥२॥

अस्याश्चतुरक्षरीविष्णुवनितायाः कवचस्य भगवान् श्रीशिव ऋषिरनुष्टुप्छन्दो वाग्भवी देवता वाग्भवं बीजम् लज्जा शक्तिः रमा कीलकं कामबीजात्मकं कवचं मम सुकवित्व-सुपाण्डित्यसर्वसिद्धिसमृद्धये विनियोगः॥३॥

ऐंकारो मस्तके पातु वाग्भवी सर्वसिद्धिदा।
ह्रीं पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शङ्करी ॥४॥

जिह्वायां मुखवृत्ते च कर्णयोर्गण्डयोर्नसि ।
ओष्ठाधरे दन्तपङ्क्तौ तालुमूले हनौ पुनः ॥५॥
पातु मां विष्णुवनिता लक्ष्मीः श्रीवर्णरूपिणी ।
गण्डयुग्मे भुजद्वन्द्वे स्तनद्वन्द्वे च पार्वती ॥६॥
हृदये मणिबन्धे च ग्रीवायां पार्श्वयोः पुनः ।
पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा ॥७॥
उपस्थे च नितम्बे च नाभौ जङ्घाद्वये पुनः ।
जानुचक्रे पदद्वन्द्वे घुटिकेऽङ्गुलिमूलके ॥८॥
सधातुप्राणशक्त्यात्मसीमन्यां मस्तके पुनः ।
सर्वाङ्गे पातु कामेशी महादेवी समुन्नतिः ॥९॥
व्युष्टिः पातु महामाया उत्कृष्टिः सर्वदावतु ।
ऋद्धि पातु सदा देवी सर्वत्र शम्भुवल्लभा ॥१०॥
वाग्भवी सर्वदा पातु पातु मां हरगेहिनी ।
रमा पातु सदा देवी पातु माया सुराट् स्वयम् ॥११॥
सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी ।
विजया पातु भवने जया पातु सदा मम ॥१२॥
शिवदूती सदा पातु सुन्दरी पातु सर्वदा ।
ईश्वरी पातु सर्वत्र भेरुण्डा सर्वदावतु ॥१३॥
त्वरिता पातु मां नित्यमुग्रतारा सदावतु ।
पातु मां कालिका नित्यं कालरात्रिः सदावतु ॥१४॥
वनदुर्गा सदा पातु कामाख्या सर्वदावतु ।
योगिन्यः सर्वदा पान्तु मुद्राः पान्तु सदा मम ॥१५॥
मात्राः पान्तु सदा देव्यश्चक्रस्था योगिनीगणाः ।
सर्वत्र सर्वकार्येषु सर्वकर्मेषु सर्वदा ॥१६॥
पातु मां देवदेवी च लक्ष्मीः सर्वसमृद्धिदा ।
विलिख्य कवचं दिव्यं स्वयम्भुकुसुमैः शुभैः ॥१७॥
स्वशुक्रैः परशुक्रैश्च नानागन्धसमन्वितैः ।
गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा ॥१८॥
सुतिथौ शुभयोगे वा श्रवणायां रवेर्दिने ।
अश्विन्यां कृत्तिकायां वा फल्गुन्याञ्च मघासु च ॥१९॥
पूर्वभाद्रपदायोगे स्वात्यां मङ्गलवासरे ।
विलिख्य प्रपठेत् स्तोत्रं शुभयोगे सुरालये ॥२०॥

आयुष्मत् प्रीतियोगे वा ब्रह्मयोगे विशेषतः ।
इन्द्रयोगे शुभयोगे शुक्रयोगे तथैव च ॥२१॥
कौलवे बालवे चैव वणिजे चैव सत्तम ।
शून्यागारे श्मशाने वा विजने च विशेषतः ॥२२॥
कुमारीं पूजयित्वा च यजेद्देवीं सनातनीम् ।
मत्स्यैर्मांसैः शाकसूपैः पूजयेत् परदेवताम् ॥२३॥
घृताद्यैः सोपकरणैः पूपसूपैर्विशेषतः ।
ब्राह्मणान् भोजयित्वा च पूजयेत्परमेश्वरीम् ॥२४॥
आखेटकमुपाख्यानं ततः कुर्याद्दिनत्रयम् ।
तदा धरेन्महारथां शङ्करेणेति भाषितम् ॥२५॥

इति विश्वसारतन्त्रे लक्ष्मीकवचं समाप्तम्

समाप्तोऽयं ग्रन्थः

